# POLIO, QUIT INDIA!

Protect your child and the nation!
Participate in the mass
polio vaccination!




## December 7, 1997
## January 18, 1998

CALLING PARENTS!

Even if

- the child is indisposed or has diarrhoea
- the child had been given polio drops earlier

**TO ENSURE CENT PER CENT PROTECTION**



**Remember to**

Take your children (under 5) to the nearest immunisation booth / centre to receive

**TWO ADDITIONAL DROPS OF THE ORAL POLIO VACCINE on National Immunisation Days**



Be a part of the global Polio Eradication Campaign




**You don't just have to protect, but help eradicate POLIO**





# चन्दमामा

नवम्बर् -१९९७



## अन्तरङ्गम्






प्रतिकृतिमूल्यं रू. ६-००

वार्षिकं ग्राहकशुल्कं रू. ७२-००

# कुत्र प्रवेशः प्राप्तः ?

| | |
|---|---|
| रामः - कस्मिन् विद्यालये प्रवेशः प्राप्तः भवता ? | In which college have you got a seat ? |
| कृष्णः - इतोऽपि न कुत्रापि । | Not yet. |
| रा - किमर्थम् ? उत्तमाः अङ्काः भवता प्राप्ताः एव खलु ? | Why ? You have scored good marks, haven't you ? |
| कृ - द्वित्रेभ्यः विद्यालयेभ्यः आवेदन-पत्रम् आनीय पूरयित्वा दत्तवान् अस्मि । तेषां फलितांशस्य निरीक्षां कुर्वन् अस्मि । | I had brought application form from 2-3 collegees. Last week I applied for admission. Now I am waiting for the results. |
| रा - कस्मिन् विद्यालये प्रवेशम् इच्छति भवान् ? | Which college would you like to join ? |
| कृ - शारदामहाविद्यालये । किन्तु तत्र प्रवेशः न लब्धः चेत् क्लेशः भवेत् इत्यतः अन्यविद्यालयानाम् आवेदनपत्राणि अपि पूरितानि । | In Sharada college. If I don't get a seat I may be put in to difficulty. That is the reason for applying to other colleges. |
| रा - सर्वत्र प्रवेशः लब्धः चेत् ... ? | If you get seat in all the colleges ....? |
| कृ - शारदाविद्यालयं प्रविशामि । | I'll join Sharada college. |
| रा - तदा अन्यतः आवेदनपत्रं यत् आनीतं तत् व्यर्थं भवति । | Then the application brought from ther colleges is of no use. Isn't it ? |
| कृ - व्यर्थता अल्पधनस्य खलु ? शारदामहाविद्यालये प्रवेशः न लब्धः चेत् अन्यत्र वा भवति इति चिन्तनं मम । विलम्बेन गतं चेत् कुत्रापि प्रवेशः न भवेत् खलु ? | That costs very little, you know ? In case of not getting seat in Sharada college, atleast I can join one of the other colleges, you know, I will not be allowed in any college if I go late. |
| रा - भवान् तु शारदामहाविद्यालये अवश्यं प्रवेशं प्राप्नुयात् । | I am very sure that you will get a seat in Sharada college. |
| कृ - अहम् अपि तथैव चिन्तयामि । तथापि दैवनिर्णयः खलु भवति अन्तिमः ? | I think so. But everything goes according to Almighty'- will, doesn't it ? |




# चन्दमामा

संस्थापकः - 'चक्रपाणिः' सञ्चालकः - 'नागिरेड्डी'

## अज्ञातपूर्वाः अपि आत्मीयाः जाताः

यदा वयं भारतस्य स्वातन्त्र्यस्य स्वर्णजयन्तीं स्मरामः तदा सहजतया स्वातन्त्र्यार्थं बहुभिः देशभक्तैः कृताः महान्तः त्यागाः अपि स्मर्यन्ते एव । तेषां देशभक्तानां शौर्यं देशभक्तिः च यदा स्मृतिपथम् आयाति तदा केषाञ्चित् विदेशीयजनानां पाशवीयव्यवहाराः अपि स्मृतिपथम् आयान्ति ।

एतदत्र स्मर्तव्यं यत् तेषु विदेशीयेषु केचन उत्तमाः अपि आसन्, ये च भारते प्रीतिं प्रदर्शयन्तः भारतस्य सेवाम् अपि कृतवन्तः । यद्यपि ते विदेशीयाः उद्योगनिमित्तम् एव भारतम् आगतवन्तः आसन्, तथापि अत्र आगमनस्य अनन्तरम् अत्रत्यां संस्कृतिं जन-जीवनक्रमं च दृष्ट्वा ते आकृष्टाः अभवन् । तेषु केचन साञ्चीस्तूपः, अजन्ता-एल्लोरागुहाः इत्यादीनि अन्विष्टवन्तः । पुनः केचन अस्माकं श्रेष्ठग्रन्थानाम् अनुवादम् आंग्लभाषया अन्यभाषाभिः च कृतवन्तः । अन्ये केचन मौखिकपरम्परया आगतानां श्रुति-स्मृति-व्याकरणादीनां ध्वनिमुद्रणं कृतवन्तः । अपरे केचन अत्रत्यानां रोगिणां दरिद्राणां च सेवां विशेषश्रद्धया कृतवन्तः ।

गतः कालः न प्रत्यावर्तते । इतिहासस्य अवलोकनसमये अस्माभिः इदमत्र स्मर्तव्यं यत् एका घटना अपरस्याः हेतुः भवति, ततः विभिन्नघटनाः प्रवर्तन्ते इति । इतिहासकाले ये अस्मत्पूर्वजेभ्यः कष्टं दत्तवन्तः ते औदार्येण अस्माभिः द्रष्टव्याः, न कदापि तिरस्करेण । ये च उत्तमानि कार्याणि कृतवन्तः, कृतज्ञतापूर्वकं तेषां स्मरणम् अपि अस्माकम् कर्तव्यम् एव ।

सम्पुटः - १४ नवम्बर् - १९९७ सञ्चिका - ८

प्रतिकृतिमूल्यं रू.६.०० * वार्षिकं ग्राहकशुल्कं रू.७२.००



# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अङ्कनी | - pencil | नखति | - scratch |
| अट्टालिका | - tarrace | निश्रेणी | - ladder |
| अपाकरणम् | - keep away from | प्रभवति | - to become |
| अभिज्ञाय | - recognising | प्रहरः | - $^1/_8$ of a day |
| अभिलषति | - desires | प्राकारभित्तिः | - fort wall |
| अवतमः | - dusk | मज्जितवान् | - drowned |
| अश्वारोहिका | - horse rider (woman) | माति | - measures |
| | | मांसपिण्डम् | - ball of flesh |
| अहर्निशम् | - day and night | यथार्थतया | - exactly |
| आटयति | - to make one run arround | वज्रचूर्णम् | - cement |
| | | वर्षति | - rains |
| उत्तरीयम् | - upper garment | वलति | - leans |
| उद्घोषयति | - announce | वितीर्णम् | - distributed |
| उन्नयनी | - lift | विद्युत्तरङ्गग्राहकाः | - electricity aerial |
| ऋते | - without | वेत्रप्रहारः | - whipping |
| कपोतः | - pegeon | व्रीहिः | - paddy |
| कूर्दितवान् | - jumped | शिखराग्रम् | - tip of the mountain |
| क्रकचः | - saw | सन्नाहः | - preparation |
| छेत्तुम् | - to cut | सन्धिः | - agreement |
| जङ्घा | - knee | सम्प्रति | - now |
| द्रष्टुकामः | - one who is eager to see | सिद्धहस्तता | - expertise |
| | | सौचिकः | - tailer |

वार्ताविशेषः -

# हाङ्काङ्

पश्चाशद्वर्षेभ्यः पूर्वं आंग्लाः भारतं परित्यज्य गतवन्तः । तथैव ९९ वर्षाणां सन्धिनियमस्य समाप्तेः अनन्तरम् अधुना मासद्वयात् पूर्वं हाङ्काङ्गनगरं चैनादेशस्य अधीनं जातम् अस्ति । हाङ्काङ्गनगरे १६० वर्षपर्यन्तं यत् ब्रिटिष्शासनं आसीत् तस्य समापनं जून् ३०तमे दिनाङ्के अभवत् ।

चैनादेशस्य दक्षिणभागे विद्यमानेषु २०० द्वीपेषु अन्यतमम् अस्ति हाङ्काङ्ग । क्रि.श.१८४१ तमे वर्षे इङ्ग्लेण्डदेशेन सह प्रवृत्तायां 'गाञ्जा'सस्यवर्धन-स्पर्धायां चैनादेशः पराजितः । अनन्तरवर्षे एव हाङ्काङ्ग ब्रिटिष्जनानां वशम् अभवत् । क्रि.श.१८६० तमे वर्षे प्रवृत्ते युद्धे आंग्लाः कोलून्प्रदेशं स्वायत्तीकृतवन्तः । २७ वर्षाणाम् अनन्तरम् १८९८तमे वर्षे चैनादेशः सन्धिं कृत्वा अन्यैः कैश्चित् प्रदेशैः सह हाङ्काङ्गप्रदेशम् अपि ९९ वर्षाणां निमित्तम् आंग्लेभ्यः दत्तवान् ।

क्रि.श.१९८४ तमे वर्षे प्रवृत्तस्य सन्धेः नियमानुसारं चैनादेशं प्रति हाङ्काङ्ग-कोलून्-नगरयोः प्रत्यर्पणम् अङ्गीकृतम् आंग्लैः । तदा एव १९९७तमस्य वर्षस्य जून् ३० तमः दिनाङ्कः अपि निश्चितः प्रत्यर्पणाय ।

सामान्यतः शतस्य वर्षाणां ब्रिटिष्शासनकाले हाङ्काङ्गनगरेण वाणिज्यक्षेत्रे प्रगतिः साधिता । मुम्बयीसिङ्गपूरवत् हाङ्काङ्गस्थानम् अपि प्रकृति-सहजनौकास्थानत्वेन वर्धितम् अभवत् । द्वितीयविश्वमहायुद्धसमये प्रगतिः किञ्चित् कुण्ठिता जाता आसीत् । किन्तु अनन्तरं तु अधिकवेगेनैव तत्र वर्धनम् अभवत् । अन्येभ्यः बहुभ्यः देशेभ्यः वाणिज्यार्थम्, उद्योगार्थं च हाङ्काङ्गनगरम् आगताः जनाः पश्चात् तत्रैव वासं कृतवन्तः सन्ति ।

''यदि हाङ्काङ्गप्रदेशः चैनादेशाधीनं स्यात् तर्हि ब्रिटिष्शासनकाले यत् स्वातन्त्र्यं, सम्पत्तेः उपरि अधिकारः च आसीत् तत् अनुवर्तते वा'' इति केषाञ्चित् संशयः आसीत् । क्रि.श.१९८४ तमे वर्षे प्रवृत्ते सन्धौ उभौ अपि देशौ तस्मिन् विषये निर्णयं स्वीकृतवन्तौ आस्ताम् ।

तदनुसारं हाङ्काङ्गप्रजानां व्यक्तिस्वातन्त्र्यम् अनुवर्तते । हाङ्काङ्गनिमित्तं पृथक् शासकीय-व्यवस्था अपि कृता विद्यते चैनादेशेन । अग्रे ५० वर्षाणि यावत् एते नियमाः अनुवर्तिष्यन्ते । हाङ्काङ्गनिमित्तमेव पृथक् शासनसभा, विनिमय-द्रव्यव्यवस्था, करव्यवस्था इत्यादयः ये सन्ति ते यथापूर्वम् अनुवर्तन्ते । विदेशव्यवहारस्य रक्षणा-विभागस्य च अधिकारः चैनादेशस्य एव भवति ।

अधिकारसमर्पणकार्यक्रमदिने ब्रिटन्-प्रतिनिधित्वेन राजकुमारः चार्ल्स्, चैनादेशस्य प्रतिनिधित्वेन अध्यक्षः जियान् जेनिन् च उपस्थितः आसीत् । राज्यपालः क्रिस् प्याटिन्वर्यः औपचारिकरूपेण चैनादेशस्य प्रमुखाधिकारिणे टुङ्ग बीह्वारिवर्याय अधिकारं समर्पितवान् ।

जून् ३०तमे दिनाङ्के इङ्ग्लेण्ड्देशे स्फोटकानि स्फोटितानि । अपि च अनन्तरदिने चैनादेशे च १०,००० कपोताः मोचिताः सन्तोषस्य प्रकटनाय ।





# कनकदासस्य कवित्वम्

कोसलराज्ये कनकदासः नाम कृषिकः आसीत् । सः बहु उत्तमः आसीत् । स्वस्य लघुक्षेत्रे कृषिं कुर्वन् सन्तोषेण सरलजीवनं कुर्वन् आसीत् सः ।

एकदा कनकदासस्य ग्रामं प्रति विष्णुशर्मा नाम कश्चित् कविः आगतवान् । तस्य काव्यं श्रोतुं ग्रामस्थाः सर्वे राममन्दिरम् आगतवन्तः । विष्णुशर्मा स्वकविताः श्रावितवान् । तस्य कविताः सरलाः उन्नतभावयुक्ताः सुलभग्राह्याः च आसन् । अतः ताः श्रुत्वा सर्वे श्लाघनपूर्वकं करताडनं कृतवन्तः । केचन हारसमर्पणं कृतवन्तः । पुनः केचन धनदानद्वारा स्वस्य अभिमानं प्रदर्शितवन्तः ।

विष्णुशर्मा कृतज्ञताः समर्पयन्, कवित्वं पुरस्कुर्वता राज्ञा दत्तं सुवर्णपदकं, ग्रामप्रमुखेण दत्तं सुवर्णं च दर्शितवान् ।

विष्णुशर्मणः कविताः श्रोतुम् आगतवत्सु कनकदासः अपि अन्यतमः । सः ग्रामजनैः कृतं कवेः सम्माननं दृष्ट्वा नितराम् आश्चर्यचकितः जातः । तस्यां रात्रौ निद्रा अपि न आगता तस्य । 'ग्रामस्थाः किमर्थं तस्य तादृशं सम्माननं कृतवन्तः' इति चिन्तनम् आरब्धवान् सः ।

'जनानां मनसि कवित्वस्य विषये अधिकगौरवादिकम् अस्ति' इति ज्ञातवान् कनकदासः । तस्मिन् क्षणे एव 'स्वयं कविना भूत्वा मया जनानां गौरवं सम्पादनीयम्' इति सः निश्चितवान् । 'यदि तथा कर्तुं शक्नोमि तर्हि मया अपि न केवलं ग्रामप्रमुखतः, अपि तु राजतः अपि सुवर्णपदकादीन् प्राप्तुं शक्यते, धनसम्पादनम् अपि कर्तुं शक्यते' इति चिन्तितवान् सः ।

लेखनीं स्वीकृत्य दीपस्य समीपे उपविश्य कविताः लेखितुं प्रयत्नम् आरब्धवान् सः ।

परन्तु कं विषयम् अधिकृत्य लेखनीयम् इति न ज्ञातं स्म तेन । एकदा तस्य दृष्टिः घोरिकां कुर्वत्याः सुप्तवत्याः पत्न्याः उपरि अपतत् ।

अनुक्षणं कनकदासः चिन्तितवान् यत् घोरिकाम् अधिकृत्य एव कविता लेखनीया इति । अतः सः पत्न्याः घोरिकायाः विषये एव कवितां लिखितवान् । लिखितां स्वकवितां पठितवतः तस्य बहु आश्चर्यम् अभवत् । अनन्तरं किञ्चित्कालाभ्यन्तरे एव तेन निद्रा प्राप्ता । स्वप्ने तेन दृष्टं यत् ग्रामस्थाः तं शिबिकायाम् उपवेश्य राज्ञः समीपं नीतवन्तः इति, राजा तेन लिखिताः कविताः श्रुत्वा अत्यन्तं सन्तुष्टः सन् एतस्य पादे कङ्कणं धारितवान् इति च ।

तस्मिन् दिने प्रातः जागरितः सः स्वप्नं स्मृत्वा बहु सन्तोषम् अनुभूतवान् । स्वकविताः कस्यचित् पुरतः श्रावणीयाः इति इच्छा तस्य मनसि उद्भूता । पार्श्वगृहस्य वेङ्कटेशः एतस्य आत्मीयमित्रम् आसीत् । सः तस्य समीपं गत्वा - ''वेङ्कटेश ! अहं कवितां लिखितवान् अस्मि । भवतः पुरतः पठितुम् आगतवान् अस्मि'' इति उक्त्वा घोरिकाकवितां पठितवान् ।

तां कवितां श्रुत्वा वेङ्कटेशः कोपेन - ''आरात्रि भवतः पत्न्याः घोरिकाकारणतः निद्रा नास्ति अस्माकम् । प्रातः भवतः कविताश्रवणम् !! धिक् भवतः सहवासम् ! इतःपरम् एतादृशीः अर्थहीन-कविताः मम पुरतः मा आनयतु'' इति उक्तवान् ।

एतत् श्रुत्वा कनकदासः खिन्नः जातः । कवितास्वादने वेङ्कटेशस्य रुचिः एव नास्ति



इति सः चिन्तितवान् । तस्मिन् दिने सायङ्काले तस्य गुरुः रामकृष्णः मार्गे गच्छन् दृष्टः । कनकदासः तस्य पुरतः स्वकविताः श्रावितवान् । ताः श्रुतवतः रामकृष्णस्य हृदये क्लेशः आरब्धः । सः तस्य कविताः मनसि एव निन्दितवान् । परन्तु प्रत्यक्षं तु किमपि न उक्तवान् । यतः सः कनकदासतः धनम् ऋणरूपेण स्वीकृतवान् आसीत् ।

रामकृष्णः असहजहासं प्रदर्शयन् - ''कनक ! विष्णुशर्मणः कविताः किञ्चित् वा ज्ञायन्ते मया । परन्तु भवतः कवितानाम् एकः शब्दः अपि न अवगम्यते । एतेन ज्ञायते यत् विष्णुशर्मणः कविताः सामान्यस्तरीयाः, भवतः कविताः च उन्नतस्तरीयाः इति । प्रथमं भवान् एताः कविताः ग्रामप्रमुखाय दर्शयतु ।



विष्णुशर्मणा यथा उपायनं प्राप्तं तथा भवता अपि प्राप्येत'' इति उक्तवान् ।

कनकदासः एतानि वचनानि यथार्थानि इति मत्वा ग्रामप्रमुखस्य समीपं गत्वा कविताः श्रावितवान् । ग्रामप्रमुखः विनोदार्थम् एवम् उक्तवान् - ''कनकदास ! एतादृश्यः कविताः मया इतःपूर्वं न श्रुताः एव'' इति । एवं वदन् सः एकं राङ्कवं सहस्रं रजतनाणकानि च दत्त्वा तं प्रेषितवान् ।

एतेन कनकदासस्य मनसि स्वकाव्यसृष्टिविषये महान् अभिमानः उत्पन्नः । आदिनं कृषिकार्यं परित्यज्य वृषभस्य विषये, कूपविषये, वीथीशुनक-विषये च सः कविताः रचितवान् । एताः राज्ञः पुरतः यदि पठिष्यामि तर्हि सः सन्तुष्टः भविष्यति इति मत्वा सः राजधानीं गत्वा राज्ञः दर्शनार्थम् अनुमतिं प्रार्थितवान् ।

कोसलराज्यस्य राजा काशीपतिः कलारसिकः आसीत् । अपि च काव्यश्रवणे तस्य महती रुचिः आसीत् । 'कृषिकः अपि कनकदासः कविताः रचितवान् अस्ति' इति वार्तां श्रुत्वा सः नितरां सन्तुष्टः । राजसभाप्रवेशार्थं कनकदासाय अनुमतिं दत्तवान् सः ।

कनकदासः राजसभायां सोत्साहं स्वकविताः श्रावितवान् । ताः श्रुत्वा महाराजस्य शिरोवेदना आरब्धा । सभायाम् उपविष्टाः बहुजनाः स्वकर्णौ हस्ताभ्यां पिहितवन्तौ ।

महाराजः कनकदासं कोपेन पश्यन् - ''मूर्ख ! एतादृश्यः अशान्तिजनिकाः कविताः एतावत्पर्यन्तं मया न श्रुताः एव । एतादृशानि अर्थहीनवाक्यानि कोऽपि कविताः इति वदति वा ?'' इति पृष्टवान् ।

तदा कनकदासः भयेन कम्पमानः - ''महाप्रभो ! अस्माकं ग्रामस्य गुरुः रामकृष्णः एताः उन्नतस्तरीयाः कविताः इति श्लाघितवान् । ग्रामप्रमुखः अपि इतःपूर्वम् एतादृशी कविता मया न श्रुता इति उक्त्वा राङ्कवं दत्तवान्'' इति उक्तवान् ।

तदा महाराजः - ''एषः कश्चित् उन्मत्तः स्यात् । विचारयन्तु । यदि तथा न तर्हि एतादृशीः असह्याः अर्थहीनाः कविताः रचिताः यत् तदर्थम् एतस्य शिरच्छेदनं कुर्वन्तु । तावत्पर्यन्तम् एतं कारागारे स्थापयन्तु'' इति सेवकान् आज्ञापितवान् ।

सेवकाः कनकदासस्य बन्धनं कृत्वा तस्य गतजीवनं ज्ञातुं तदीयं ग्रामं गतवन्तः । कनकदासस्य कष्टम् अवगतवतः ग्रामप्रमुखस्य बहु खेदः जातः । 'मया उक्तम् उपहासवाक्यम् एव सत्यम् इति मन्यमानः कनकदासः एतादृशकष्टभाग् जातः । सः कारागारात् मुक्तः भवतु' इति चिन्तयन् ग्रामप्रमुखः सेवकान् उक्तवान् - ''सः एतेषु दिनेषु कविताविषये उन्मत्तः जातः अस्ति । परन्तु उत्तममनुष्यः सः'' इति ।

सेवकाः एतं विषयं राजानम् उक्तवन्तः । महाराजः दयादृष्ट्या 'तं त्यजन्तु' इति उक्तवान् । बन्धनात् मुक्तः कनकदासः 'इतः परं कदापि कविता न लेखनीया' इति निश्चितवान् ।



ग्रामम् आगतवतः तस्य एकः सप्ताहः अतीतः । तदा कश्चित् अपरिचितः तं द्रष्टुम् आगतवान् । सः कनकदासं दृष्ट्वा - ''महाकविसार्वभौमाय नमः'' इति वदन् नमस्कृतवान् ।

तत् वचनं श्रुत्वा कम्पमानस्वरेण कनकदासः उक्तवान् - ''अहं कवि-सार्वभौमः सर्वथा न । बन्धनात् यदा मुक्तः जातः तदा एव 'इतःपरं कवितां न लिखामि' इति निश्चितवान् अस्मि । तत् भवतु । कः भवान् ?'' इति पृष्टवान् ।

तदा सः अपरिचितः हसन् - ''मम नाम निशाचरः इति । अहं कश्चित् भूतमान्त्रिकः अस्मि । कोसलराजसभायाम् अहं भवतः कविताः श्रुतवान् । भवतः कविताद्वारा धनं सम्पादयितुम् एकम् उपायं चिन्तितवान् अस्मि'' इति उक्तवान् ।

''एकदा धनाशया गत्वा अहं अवमानं प्राप्य बद्धः जातः । पुनः कदापि तादृशं दोषं न करिष्यामि' इति उक्तवान् कनकदासः ।

''इदानीं तथा न भविष्यति । मयि विश्वासः भवतु'' इति उक्तवान् निशाचरः ।

''अस्तु । मम कविताः कस्य पुरतः पठनीयाः ?'' इति संशयेन एव पृष्टवान् कनकदासः ।

तावता अन्धकारः व्यापृतः आसीत् । अतः निशाचरः - ''मया सह आगच्छतु'' इति उक्त्वा कनकदासं श्मशानं प्रति नीतवान् ।

कनकदासः भयेन सर्वत्र पश्यन् - ''मया कविताः शवानां पुरतः श्रावणीयाः किम् ?'' इति पृष्टवान् ।

''तथा नैव । भवता पिशाचानां पुरतः कविताः श्रावणीयाः । वस्तुतः मनुष्याणां यावती रुचिः भवति ततोऽपि अधिका रुचिः पिशाचानां भवति कवितानां विषये । इदानीं भवतः कविताः उच्चैः श्रावयतु तावत्'' इति उक्तवान् निशाचरः ।

कनकदासः नेत्रे दृढं निमील्य गानम् आरब्धवान् । केषुचित् एव क्षणेषु दश-द्वादश पिशाचाः आगत्य श्रद्धया कविताः शृण्वन्तः मध्ये मध्ये सम्भाषमाणाः स्थितवन्तः। कनकदासः घोरिका-शुनकादिविषयान् अधिकृत्य लिखिताः कविताः गीत्वा यदा नेत्रोन्मीलनं कृतवान् तदा परितः सर्वत्र तेन पिशाचाः दृष्टाः । ते सर्वे सन्तोषेण करताडनं कृतवन्तः । केचन पिशाचाः हारान् सृष्ट्वा कनकदासस्य कण्ठे समर्पितवन्तः । अन्ये केचन बृहद्धनस्यूतान्, आभरणस्यूतान् च आनीय तस्य पादयोः समीपे स्थापितवन्तः । तस्मात् धैर्यं प्राप्तवान् कनकदासः पुनः एकवारं कविताः गीतवान् । पिशाचाः सन्तृप्त्या शिरः चालयन्तः डयमानाः वृक्षारोहणं कृतवन्तः ।

कनकदासः धनस्य आभरणानां च स्यूतं यदा सम्यक् स्थापयन् आसीत् तदा निशाचरः आगत्य - ''धनाभरणादिषु मह्यं कस्यचित् भागस्य दानं धर्मसम्मतं खलु ?'' इति उक्तवान् ।

''निश्चयेन दीयते'' इति वदन् कनकदासः सन्तोषेण निशाचराय अर्धभागं दत्त्वा - ''मम कविताः पिशाचेभ्यः रोचते इति भवान् कथं ज्ञातवान् ?'' इति पृष्टवान् ।

तदा निशाचरः हसन् - ''मम पिशाचभाषायाः किञ्चित् परिचयः अस्ति । राजसभायाम् अहं यदा भवतः कविताः श्रुतवान् तदा तत्र पिशाचभाषायाः छाया मया अवलोकिता । तदर्थम् एव अहं भवन्तम् अत्र आनीतवान् । मम योजना सफला जाता'' इति उक्तवान् ।

स्वकवितायां पिशाचभाषायाः छाया अस्ति इत्येतां वस्तुस्थितिं ज्ञात्वा कनकदासः कवितानिर्माणस्य चिन्तनं सम्पूर्णतया त्यक्तवान् । किन्तु कविताद्वारा धनसम्पादनं करणीयम् इति तदीया आशा तु सफला जाता आसीत् ।





# अम्बुजायाः अध्ययनम्

गुरुपुरस्थायाः अम्बुजायाः नागराजः नाम पुत्रः आसीत् । प्राप्तवयस्कस्य तस्य विवाहः अभवत् । तस्य पत्नी ऊर्मिला पतिगृहम् आगतवती । सा बहु पठितवती आसीत् । श्वश्रूः अम्बुजा अक्षराणि अपि न जानाति स्म । एतेन श्वश्र्वाः विषये ऊर्मिलायाः अनादरः उत्पन्नः । अपि च तस्याः अहङ्कारः अपि अधिकः अभवत् । अम्बुजा अपि आत्महीनताम् अनुभवति स्म । एवं परस्परं सामञ्जस्यस्य अभावात् ते द्वे अपि कलहं कुरुतः स्म । एतेन नागराजस्य परिस्थितिः शोचनीया जाता आसीत् ।

एवम् एव कानिचन दिनानि अतीतानि । कदाचित् अम्बुजा एकं पत्रं प्राप्तवती । अम्बुजायाः कश्चित् दूरबन्धुः मरणसमये स्वस्य एकलक्षरूप्यकात्मिकां सम्पत्तिं तस्याः नाम्नि लिखितवान् आसीत् । परं तत्र कश्चन नियमः कृतः आसीत् यत् - ''यदा अम्बुजा तेन लिखितं पत्रं स्वयं पठितुं समर्था भविष्यति तदा एव सा तत् धनं प्राप्तुं शक्ता भविष्यति'' इति । तस्य बन्धोः सुहृत् कश्चित् एतत् पत्रं दत्त्वा गतवान् ।

अम्बुजा पठनम् एव न जानाति स्म खलु ? अतः पुत्रः नागराजः पत्रस्य विषयं मात्रे निवेद्य उक्तवान् - ''अम्ब! वयं तु न दरिद्राः । अस्माकं १० एकरपरिमिता भूमिः अस्ति । तथापि गृहं स्वयमेव आगतायाः लक्ष्म्याः प्रतिप्रेषणं मूर्खता एव । अतः भवती अद्य आरभ्य एव पठनस्य आरम्भं करोतु'' इति ।

''अस्मिन् वयसि मया पठनं कृतं चेत् सर्वे उपहसेयुः'' इति उक्तवती अम्बुजा ।

''अम्ब ! अध्ययनस्य वयसः च कः सम्बन्धः ? कोऽपि भवतीं दृष्ट्वा न उपहसति, प्रत्युत सर्वे श्लाघन्ते । अपि च भवती एतेन लक्षरूप्यकाणां सम्पत्तिम् अपि

प्राप्स्यति खलु ? ऊर्मिला भवतीं पाठयति । 'मास्तु' इति न वक्तव्यम्'' इति ताम् अनुनयपूर्वकम् उक्तवान् नागराजः ।

अम्बुजा पुत्रस्य वचनं श्रुत्वा अङ्गीकारं सूचितवती । सम्पत्तेः आशया ऊर्मिला अपि श्वश्र्वाः पाठनम् अङ्गीकृतवती ।

नागराजः आपणतः कृष्णफलकं, लेखनफलकं, सुधाखण्डः इत्यादिकम् आनीय दत्तवान् । गृहकार्यस्य समाप्तेः अनन्तरम् ऊर्मिला श्वश्र्वाः पाठनम् आरब्धवती । पञ्चषाणां दिनानाम् अध्ययनेन अम्बुजाया अध्ययने रुचिः अधिका जाता ।

एकमासाभ्यन्तरे एव अम्बुजा पदानि लेखितुं शक्ता अभवत् । पञ्चसु मासेषु एव सा सर्वं पठितुं समर्था अभवत् ।

अध्ययनेन सह पञ्चमासाभ्यन्तरे ऊर्मिला, अम्बुजा च आत्मीये जाते । ऊर्मिला गृहकार्ये श्वश्र्वाः साहाय्यं करोति स्म । श्वश्रूः अम्बुजा स्नुषां गुरुः इति आदरेण पश्यति स्म । श्वश्र्वाः श्रद्धां दृष्ट्वा ऊर्मिलायाः अपि तस्याम् आदरः उत्पन्नः ।

पठनं ज्ञातवती अम्बुजा कदाचित् पुत्रम् उद्दिश्य - ''बन्धोः मरणशासम् अत्र आनयाम वा ? तत् अहम् अधुना पठितुं शक्नोमि'' इति उक्तवती ।

तदा मन्दं हसन् नागराजः पत्नीं मातरं च एकत्र उपवेश्य - ''सम्पत्तिः प्राप्यते इति प्रकरणम् अहमेव उत्पादितवान् । वस्तुतः कोऽपि मातुः नाम्नि सम्पत्तिं न लिखितवान् अस्ति । भवत्यौ इतः परम् अपि एवम् एव स्नेहेन जीवताम्'' इति उक्तवान् ।

पुत्रस्य वचनं श्रुत्वा अम्बुजा सन्तोषेण उक्तवती - ''भवान् उत्तमं कार्यम् एव कृतवान् अस्ति । वृद्धा अहम् इतः परं रामायणं, भारतं, भागवतं च पठित्वा मम शेषजीवनं यापयितुं शक्नोमि'' इति ।

ऊर्मिला अपि अभिमानेन श्वश्रूं पश्यन्ती पतिम् उद्दिश्य -''अहम् अपि एतेन पाठनेन अनुभवं प्राप्तवती अस्मि । इतः परम् अहम् प्रतिवेशिनः बालान् मेलयित्वा पाठयिष्यामि । तेन मया अपि सन्तोषः लभ्यते'' इति उक्तवती उत्साहेन ।





# सम्राट् अशोकः

## ९

*(पितुः वचनानुसारम् अशोकः उज्जयिनीं प्रति गतवान् । मार्गे सः विदिशानगर्याः पर्वतस्य उपत्यकायां वासं कृतवान् । तत्र शाक्यकन्यायाः विदिशायाः परिचयः अभवत् तस्य । सुषेणेन प्रेषिते नर्तक्यौ विदिशायाः साहाय्येन बद्धे । अशोकः विदिशां परिणेतुम् इष्टवान् । बौद्धभिक्षोः उपगुप्तस्य अनुमतिं प्राप्य विदिशा परिणयप्रस्तावम् अङ्गीकृतवती । ततः अशोक-विदिशयोः विवाहः सम्पन्नः । तदनन्तरम्...)*

क्षिप्रानद्याः तीरे विराजमाना उज्जयिनी एका सुन्दरी नगरी । कृषिं कृत्वा वाणिज्योद्यमेन च तत्र जनाः सुखेन जीवन्ति स्म । युवराजः अशोकः अपि तत्र राजप्रतिनिधिः सन् उत्तमरीत्या राज्य-परिपालनं कुर्वन् आसीत् ।

तस्य पत्नी विदिशा अपि स्वस्य दयागुणेन सर्वेषाम् आदरपात्रतां गता आसीत् । पञ्चसु वर्षेषु अतीतेषु तयोः दम्पत्योः एकः पुत्रः एका पुत्री च जातौ । पुत्रस्य महेन्द्रः इति, पुत्र्याः सङ्घमित्रा इति च नामकरणं कृतवन्तौ तौ । पुत्रौ अत्यन्तं प्रीत्या तौ पालयन्तौ आस्ताम् ।

उज्जयिन्याः परिस्थितेः विषयं पित्रे निवेदयितुम् अशोकः यशं विशेष-प्रतिनिधित्वेन पाटलीपुत्रं प्रेषितवान् । आगतवन्तं यशं दृष्ट्वा महाराजः बिन्दुसारः कोपेन – ''मम अनुमत्या विना अशोकः

कथं काञ्चित् ऊढवान् ? पितुः विषये आदरवतां व्यवहारः एतादृशः एव भवति किम् ?'' इति पृष्टवान् ।

''महाप्रभो ! क्षन्तव्यः अहम् । युवराजः अशोकः विदिशायाः वरणार्थं भवतः अनुमतिं सम्प्रार्थ्य विशेषदूतद्वारा पत्रं प्रेषितवान् आसीत् । तेन प्रथमं कृतं तदेव कार्यम्'' इति उक्तवान् यशः ।

''किन्तु मया तादृशं पत्रं न प्राप्तम् एव किल !'' इति उक्तवान् बिन्दुसारः ।

''भवान् तत् पत्रं न प्राप्तवान् ? एतत् महते आश्चर्याय एव । यतः भवतः सम्मतेः पत्रं युवराजस्य समीपे अधुनाऽपि अस्ति । अत्र काऽपि वञ्चना स्यात्'' इति विनयेन उक्तवान् यशः ।



राजा बिन्दुसारः मौनेन शिरः अवनमितवान् । तदा यशः महाराजं - विदिशा कथम् अशोकं रक्षितवती, कथं तयोः परिचयः स्नेहः च अभवत् , विदिशा अधुना कथं तस्य अनुरूपा पत्नी सती व्यवहरन्ती अस्ति इत्यादिकं विस्तरेण उक्तवान् ।

महाराजः अपि सहनया सर्वं श्रुत्वा - ''न ज्ञायते - वस्तुस्थितिः का इति ? मया अन्यथा एव चिन्तितम् आसीत् । भवान् तु अन्यत् निवेदयन् अस्ति'' इति यशम् उक्त्वा अधिकारिणम् आहूय - 'यशस्य वासार्थं योग्यां व्यवस्थां करोतु' इति आदिष्टवान् ।

तस्मिन् एव दिने सायङ्काले महाराजः प्रधानमन्त्रिणं भल्लाटकम् आहूय - ''हे महामन्त्रिन् ! अहं बहुभ्यः वर्षेभ्यः रोगपीडितः अस्मि । इतः परम् अहं बहूनि दिनानि न जीवामि इति भासते । मम मनः अपि बहु व्याकुलं भवत् अस्ति । तस्य कारणं किम् इति भवान् जानाति किम् ?'' इति पृष्टवान् ।

''प्रभो ! यदि तावदपि अहं ज्ञातुं न शक्नुयां तर्हि भवतः सेवां कर्तुम् एव अनर्हः स्याम्'' इति उक्तवान् मन्त्री ।

राजा व्यथामिश्रिततया हसन् - ''हे मन्त्रिन् ! चन्द्रगुप्तमौर्येण स्थापितस्य अस्य विशालस्य साम्राज्यस्य भविष्यं स्मरतः मम भयं दिने दिने वर्धते । मरणशय्यायां विद्यमानस्य महाराजस्य मम समीपे उत्तराधिकारी भवेत् खलु ? अतः तक्षशिलातः सुषेणम् आनयतु'' इति उक्तवान् ।

''महाराजः यथा आज्ञापयति तथा अहं



करोमि । तेन एव सह महाराजः इतोऽपि दीर्घकालं जीवतु इति देवं प्रार्थयामि अपि'' इति उक्तवान् मन्त्री ।

''सुषेणस्य प्रत्यानयनं किमर्थम् इति तु भवान् जानाति एव । तस्मिन् विषये भवतः अभिप्रायः मम अभिप्रायात् न भिद्यते किम् ?'' इति पृष्टवान् महाराजः ।

मन्त्री राज्ञः प्रश्नस्य उत्तरम् अनुक्षणं न दत्तवान् । किञ्चित्कालं मौनेन स्थित्वा - ''महाप्रभो ! मम अभिप्रायः कः इति प्रायः भवान् जानाति एव । तथापि मुक्ततया कथनं मम कर्तव्यम् इत्यतः वदन् अस्मि । सुषेणः एतस्य सिंहासनस्य उत्तराधिकारी भवितुं न अर्हति'' इति दृढस्वरेण उक्तवान् ।

''भवान् यत् वदति तत् राज्यहितदृष्ट्या एव इति मम अस्ति एव दृढः विश्वासः । राज्यभारनिर्वहणे अल्पं सामर्थ्यं सुषेणस्य इति अहम् अपि जानामि । किन्तु ज्येष्ठपुत्रः सः एव इत्यतः सः एव सिंहासनारोहणं करोतु इति मम अपेक्षा । तस्य सामर्थ्यं वर्धताम् इति उद्देशेन एव मया सः तक्षशिलां प्रति प्रेषितः'' इति उक्तवान् राजा ।

''किन्तु महाराज ! तक्षशिलां प्रति सुषेणस्य गमनेन दुरदृष्टवशात् लाभस्य न, अपि तु हानेः एव वर्धनं जातं दृश्यते । सुषेणः विद्रोहिणां दमनम् अकृत्वा तेषां स्वामिने उत्कोचं दत्त्वा तं वशीकृतवान् अस्ति । ते विद्रोहिणः अधुना पूर्वापेक्षया अधिकतया एव प्रजाः पीडयन्तः सन्ति । एवं युवराजः एव शत्रूणां साहाय्यम् आचरन् अस्ति इति कारणेन ते प्रबलाः भवन्तः सन्ति । यदा कदाऽपि प्रजाः राजविरोधं कुर्युः इति गुप्तचराः वार्ताम् आनीतवन्तः सन्ति । युवराजः तु सर्वदा विलासजीवने रतः अस्ति इति कारणेन शासनं तु पूर्णतया स्थगितम् इव एव अस्ति'' इति उक्तवान् मन्त्री किञ्चित् कोपेन एव ।

''एषा वार्ता मम श्रुतिपथम् अपि आगता अस्ति । किन्तु तस्याम् अधिकतया उत्प्रेक्षा अस्ति इति अहं भावयामि'' इति उक्तवान् राजा दीर्घं निःश्वसन् ।

''तस्यां कापि उत्प्रेक्षा नास्ति महाराज ! सर्वं यथार्थम् अस्ति'' इति उक्तवान् मन्त्री ।

''उत्प्रेक्षा नास्ति इति निश्चयभावेन कथं वदति भवान् ?'' इति पृष्टवान् राजा ।

''प्रभो ! देशहितनिष्ठाः विश्वासार्हाः गुप्तचराः बहवः सन्ति अस्माकं देशे । ते सर्वस्वं वा त्यजेयुः, किन्तु असत्यं तु न

वदेयुः । तादृशैः आनीता वार्ता अप्रिया स्यात् कदाचित्, किन्तु उत्प्रेक्षायुक्ता तु न भवति'' इति उक्तवान् मन्त्री ।

''तर्हि मगधसिंहासनम् अलङ्कर्तुं सुषेणः अनर्हः इति भवान् अभिप्रैति किम् ?'' इति पृष्टवान् राजा ।

''आम् । सः एव मम दृढः अभिप्रायः'' इति उक्तवान् मन्त्री ।

''तर्हि एतत् सिंहासनं कस्मै समर्पणीयम् इति भवान् चिन्तयति ?'' इति पृष्टवान् राजा ।

''युवराजे अशोके सर्वाः अर्हताः सन्ति । विद्रोहिणां दमनेन विशालस्य राज्यस्य शासनेन च स्वसामर्थ्यं दक्षतां च सम्यग्रूपेण प्रकाशितवान् अस्ति सः'' इति उक्तवान् मन्त्री ।



अल्पस्य मौनस्य अनन्तरं राजा उक्तवान् - ''भल्लाटक ! अस्मिन् विषये कमपि निर्णयं स्वीकर्तुम् अहं सद्यः असमर्थः अस्मि'' इति ।

''प्रभो ! भवान् अधुना विश्रान्तिं स्वीकरोतु । पश्चात् अस्मिन् विषये निर्णयं कर्तुं शक्नुमः'' इति उक्त्वा राजानं नत्वा मन्त्री ततः निर्गतवान् ।

पुनः घण्टाभ्यन्तरे एव मन्त्रिणे राजभवनात् आह्वानम् आगतम् । किन्तु तत् महाराजस्य न आसीत्, अपि तु ज्येष्ठ-राज्ञ्याः आसीत् । मन्त्रिणा राजभवन-प्राप्तिसमये राजवैद्यः, राजपुरोहितः, ज्येष्ठराज्ञी च राज्ञः मञ्चस्य समीपे आसन् ।

आगतं मन्त्रिणं दृष्ट्वा राज्ञी उक्तवती - ''मन्त्रिवर्य ! महाराजः अकस्मात् प्रज्ञाहीनः जातः अस्ति । अतः युवराजः सुषेणः अधुना एव तक्षशिलातः अत्र आनाययितव्यः'' इति ।

''यथाऽऽज्ञापयति महाराज्ञी'' इति उक्तवान् मन्त्री ।

''तर्हि अधुना एव दूतं प्रेषयति खलु भवान्'' इति उक्तवती राज्ञी ।

''एकघण्टाभ्यन्तरे योग्यां व्यवस्थां करिष्यामि'' इति उक्तवान् मन्त्री ।

''भवतु । तावति काले अहं पुत्राय एकं पत्रं लेखिष्यामि । भटाः गमनात् पूर्वम् अत्र आगत्य तत् नयन्तु'' इति उक्त्वा त्वरया अन्तः गतवती महाराज्ञी ।

मन्त्री राजवैद्यं पश्यन् - ''महाराजस्य परिस्थितिः अधुना कथम् अस्ति ?'' इति पृष्टवान् कातरतया ।



"महाराजस्य श्वस्तनसूर्योदयदर्शनमपि संशयास्पदम् एव" इति उक्तवान् राजवैद्यः ।

"कथमपि महाराजस्य प्राणान् रक्षितुं प्रयत्नं करोतु । आवश्यकतायां सत्यां माम् आह्वयतु । अहं आगमिष्यामि" इति उक्त्वा ततः निर्गतवान् प्रधानमन्त्री । तस्य पृष्ठतः एव राजपुरोहितः अपि गतवान् ।

मन्त्री द्वारे स्थितं भटम् आहूय - "वयं रहस्यमन्त्रालोचनभवने भवामः । भवान् सेनाधिपतिं तत्र आगन्तुं वदतु" इति आज्ञाप्य त्वरया अग्रे गतवान् ।

तदा एव यशः सुभद्रादेव्याः समीपं गत्वा तां नमस्कृत्य - "हे मातः ! युवराजेन अशोकेन प्रेषितः अहम् उज्जयिनीतः आगतः अस्मि । मम नाम 'यशः' इति" इति उक्तवान् विनयेन ।

"तथा वा ? अशोकं दृष्टवत्याः मम कति दिनानि अतीतानि ! मम पुत्रः कुशली खलु" इति पृष्टवती सुभद्रा ।

"अम्ब ! युवराजः कुशली एव अस्ति । सः देवीसदृशीं विदिशां वृतवान् अस्ति । अपि च तयोः दम्पत्योः सुन्दरम् अपत्यद्वयमपि अस्ति । तयोः दर्शनं यदि स्यात् तर्हि भवती निश्चयेन आनन्दतुन्दिला भविष्यति" इति उक्तवान् यशः सन्तोषमिश्रितेन स्वरेण ।

"मम अपि उज्जयिनीं प्रति आगन्तुम् इच्छा अस्ति । परं महाराजस्य आरोग्यं सम्यक् नास्ति इति कारणेन अधुना आगन्तुं न शक्नोमि" इति वदन्ती सुभद्रा द्वारे आगताम् "आगच्छतु" इति संज्ञां कुर्वतीं दासीं दृष्ट्वा मध्ये एव सम्भाषणं स्थगयित्वा अन्तः गत्वा उद्वेगेन प्रत्यागत्य - "महाराजस्य स्थितिः बहु गम्भीरा जाता अस्ति इति श्रूयते । प्रातःपर्यन्तं जीवनमपि कष्टकरम् इति वदन्तः सन्ति ज्येष्ठाः" इति उक्तवती दुःखेन ।

"तथा वा" इति उक्त्वा यशः ततः प्रतिगमनाय उद्युक्तः अभवत् । तदा सुभद्रा - "भोः, महाराजः यावत् जीवति तावत् मम कोऽपि क्लेशः नास्ति । किन्तु अनन्तरं मम अत्र नरकवासः एव भविष्यति । युवराजं सुषेणम् अहम् पुत्रवत् पश्यामि चेदपि सः मयि पुत्रवत् न आचरति, अपि तु बहुधा द्वेषं करोति । तस्य माता तु मां द्रष्टुम् अपि न इच्छति । अतः भवान् कानिचन दिनानि अत्रैव वसतु । किमपि अमङ्गलं

भवति चेत् अहं भवता सह उज्जयिनीम् आगमिष्यामि'' इति उक्तवती अश्रूणि श्रावयन्ती ।

''हे मातः, भवत्याः भयं मास्तु । तानि दिनानि दूरे न सन्ति, येषु अन्याः राज्ञ्यः अपि भवतीं 'राजामाता' इति निर्दिशन्त्यः आदरेण पश्येयुः'' इति उक्तवान् यशः ।

एतत् श्रुत्वा सुभद्रा मूकविस्मिता सती यशमेव पश्यन्ती स्थितवती । तदा यशः पुनश्च - ''हे अम्ब ! महावीरस्य गुणवतः भवत्याः पुत्रस्य सेवाभाग्यम् अहम् अधुना प्राप्तवान् अस्मि । अस्य साम्राज्यस्य भविष्यं केषुचित् एव दिनेषु निर्णीतं भविष्यति । अहं पुनः पुनः आगत्य भवतीं द्रष्टुं न शक्नोमि । अतः विश्वासार्हाणां दासीनां द्वारा राजभवनस्य वार्ताः काले काले मह्यं प्रेषयतु । अवशिष्टं कार्यम् अहं करिष्यामि । माम् आषिशा अनुगृह्णातु'' इति वदन् तस्याः पादयोः नत्वा ततः निर्गतवान् ।



मन्त्रिणं द्रष्टुं रहस्यमन्त्रालोचनमन्दिरम् आगतः सेनाधिपतिः - ''सुषेणस्य सिंहासनारोहणं वैयक्तिकतया अहं न अङ्गीकरोमि । तथापि सिंहासनार्थं स्पर्धा यदि स्यात् तर्हि ज्येष्ठपुत्रस्य पट्टाभिषेककरणं मम दायित्वं भावयामि अहम्'' इति उक्तवान् ।

''भवतः राजभक्त्यै, कर्तव्यपालनार्थं च भवन्तम् अभिनन्दामि अहम् । तथापि मगधसिंहासनसम्बद्धनिर्णयः राजपुरोहितेन एव स्वीक्रियते इति विषयः अस्माभिः स्मरणीयः । मौर्यसाम्राज्यस्य स्थापनस्य कारणीभूतः आचार्यचाणक्यः एव प्रथमः पुरोहितः । पश्चात् एव मन्त्री इति अस्माभिः न विस्मरणीयम्'' इति उक्तवान् मन्त्री ।

''भवतः अभिप्रायः मया न ज्ञातः'' इति उक्तवान् सेनाधिपतिः ।

तदा मन्त्री पार्श्वे उपविष्टं राजपुरोहितं दृष्टवान् ।

तदा राजपुरोहितः उक्तवान् - ''अहं सर्वेषां राजकुमाराणां जातकं दृष्टवान् अस्मि । अशोके एव चक्रवर्तिनः अर्हताः सन्ति । सुषेणः साम्राज्यस्य विभजनस्य कारणं भविष्यति'' इति ।

''तर्हि भवतः इच्छानुसारम् एव सर्वं भवतु'' इति उक्तवान् सेनाधिपतिः ।

''बहु सन्तोषः । मम अपि अशोके अधिका प्रीतिः, विश्वासः वा नास्ति ।

तथापि साम्राज्यस्य रक्षणार्थम् एवं करणीयम् एव'' इति उक्तवान् मन्त्री ।

''तत् अहम् अपि जानामि एव । भवतु नाम । अधुना तक्षशिलां प्रति, उज्जयिनीं प्रति च दूतान् प्रेषयिष्यामि । कः पूर्वम् आगमिष्यति इति दृष्ट्वा अग्रिमाः व्यवस्थाः चिन्तनीयाः'' इति उक्तवान् सेनाधिपतिः ।

अवतमसावृते प्रकोष्ठे उपविष्टः अस्ति यशः । तस्य पुरतः ते नर्तक्यौ स्तः, ये च पञ्चवर्षेभ्यः पूर्वम् अशोकं मारयितुम् नियुक्ते आस्ताम् । ते पश्चात् अशोकेन क्षान्ते विदिशायाः सेवां कुर्वत्यौ आस्ताम् । अधुना पाटलीपुत्रं प्रत्यागतवत्यौ आस्ताम् । ते पृष्टवत्यौ - ''आवाभ्याम् अधुना किं करणीयम् इति वदतु'' इति ।

''अधुना अशोकस्य प्रत्युपकारं कर्तुम् अवकाशः प्राप्तः अस्ति भवतीभ्याम् । सुषेणः यथा विलम्बेन पाटलीपुत्रं प्राप्नुयात् तथा भवतीभ्यां करणीयम् । भवत्यौ तु अश्वारोहिके एव । अतः भवत्योः कृते द्वौ उत्तमौ अश्वौ, द्वौ रक्षकौ च ददामि । तौ रक्षकौ तक्षशिलां प्रति गमनार्थं समीपमार्गं जानीतः । श्वः राजदूताः इतः गमिष्यन्ति । ततः पूर्वमेव भवद्भिः तक्षशिला प्राप्तव्या । अतः अद्यैव प्रस्थातव्यम्'' इति उक्तवान् यशः ।

''अद्य रात्रौ एव गन्तव्यं वा ? अल्पप्रमाणेन वृष्टिः अपि आगच्छन्ती अस्ति'' इति उक्तवती तयोः अन्यतमा ।

''चिन्ता न क्रियताम् । अशोकः चक्रवर्ती भविष्यति चेत् भवत्योः जीवने सुवर्णवृष्टिः एव भविष्यति'' इति हसन् उक्तवान् यशः ।

''आवां सुषेणं वञ्चितवत्यौ इति विदिशा यदि ज्ञास्यति तर्हि खिन्ना भविष्यति । तथापि आवाभ्याम् अशोकस्य ऋणं तु अवश्यं प्रत्यर्पणीयम् एव'' इति उक्तवत्यौ नर्तक्यौ ।

''न केवलं तावत् । अद्यपर्यन्तं संन्यासिनीवत् जीवितवतीभ्यां भवतीभ्यां स्वसामर्थ्यं प्रदर्शयितुम् अयम् एकः अपूर्वः अवकाशः'' इति उक्तवान् यशः ।

''यद्यपि आवां परिवर्तिते, तथापि आवयोः जन्मजातगुणाः इतोऽपि कियता प्रमाणेन सन्ति इति परीक्षां कुर्वः एव'' इति उक्तवत्यौ नर्तक्यौ । - *(अनुवर्तते)*






# व्यवहारशास्त्रम्

दृढसङ्कल्पः त्रिविक्रमः पुनश्च वृक्षस्य समीपं गत्वा शवं स्कन्धे आरोप्य यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् । तदा शवान्तर्गतः वेतालः – ''हे राजन्, मध्यरात्रे भयजनके श्मशाने विघ्नान् अपरिगणय्य निरन्तरं गच्छतः भवतः अविरतप्रयत्नस्य दर्शनेन भासते यत् भवान् न केवलं राजनीतिशास्त्रम्, अपि तु अन्यानि सर्वाणि शास्त्राणि अपि अधीतवान् इति । सर्वाणि शास्त्राणि अधीतवान् अपि कश्चित् व्यवहारज्ञानरहितः भवति चेत् उपहासस्य विषयः भवति कदाचित् । पूर्वं विकासः विशाखः चेति उभौ शास्त्रज्ञौ स्वसमीपम् आगतवतां मार्गदर्शनं कुरुतः स्म । तयोः कः वस्तुतः शास्त्रज्ञः इति न ज्ञायते स्म । तयोः कथां वदामि । श्रद्धया शृणोतु तावत्'' इति उक्त्वा कथाम् आरब्धवान् ।

माधवपुरे विकासनामकः धनिकः

# वेतालकथा



आसीत् । पूर्वजैः सङ्गृहीता सम्पत्तिः एव अधिका आसीत् इति कारणेन सः किमपि कार्यम् अकुर्वन् सुखेन जीवनं यापयति स्म । स्वस्य अतृप्तिनिवारणार्थं सः शास्त्राभ्यासम् आरब्धवान् । किमपि न ज्ञायते चेत् सः ज्ञातवतां पण्डितानां सम्पर्कं कृत्वा सन्देहपरिहारं करोति स्म ।

एवं केषुचित् एव दिनेषु विकासः शास्त्रज्ञः अभवत् । तदारभ्य तस्य मनसि भासते स्म यत् 'मां परितः विद्यमानाः सर्वे मूढाः' इति । तैः कृतेषु कार्येषु कोऽपि दोषः दृश्यते स्म तेन । यदि विकासः दोषं दर्शयति तर्हि ते कुपिताः भवन्ति स्म । दोषप्रदर्शनेन विना स्थातुं विकासस्य शास्त्रज्ञानयुतं मनः न अङ्गीकरोति स्म ।

विकासः धनिकः आसीत् इति कारणेन बहवः जनाः तस्य समीपं साहाय्यं, मार्गदर्शनं च प्राप्तुम् आगच्छन्ति स्म । ततः धनलाभः अपि भवति इति ते जानन्ति स्म ।

एवं सति कदाचित् भीमनामकः कश्चित् तस्य समीपम् आगत्य - ''श्रीमन् ! मम पुत्र्याः विवाहः निश्चितः अस्ति । षण्णां मासानाम् अनन्तरं विवाहः इति पूर्वं निश्चितम् आसीत् । किन्तु वरपक्षीयाः सप्ताहत्रयाभ्यन्तरे एव विवाहः भवेत् इति इदानीं वदन्तः सन्ति । विवाहार्थं पञ्चसहस्रं रूप्यकाणि आवश्यकानि । मम समीपे द्विसहस्रं रूप्यकाणि सन्ति । षण्मासेषु तावत् धनं सङ्गृहीतं भविष्यति इति पूर्वं मम विश्वासः आसीत् । किन्तु अधुना किं करणीयम् इति न ज्ञायते'' इति उक्तवान् ।

विकासः अनुक्षणं तम् उक्तवान् - ''तत्र किमर्थं चिन्ता ? षण्मासपर्यन्तम् उत्तमः मुहूर्तः नास्ति इति शास्त्रं वदति । एतं विषयं वरपक्षीयान् वदतु'' इति ।

''श्रीमन् ! अहं तं विषयं जानामि । किन्तु वरगृहे कश्चित् वृद्धः अस्ति । सः मरणात् पूर्वं प्रपौत्रं द्रष्टुम् इच्छति । 'यदि मुहूर्तः सम्यक् न स्यात् तर्हि अनन्तरं शान्तिं करिष्यामः' इति वदन्तः सन्ति ते । अतः अधुना विवाहः करणीयः एव'' इति उक्तवान् भीमः ।

क्षणकालस्य मौनस्य अनन्तरं भीमः - ''वरः सुन्दरः, धनवान् गुणवान् च अस्ति । एतादृशः वरः पुनः लभ्येत इति मम विश्वासः नास्ति । उत्तममुहूर्तात् अपि उत्तमसम्बन्धः एव प्रमुखः खलु ? अतः अहम् अपि - 'तेषाम् अपेक्षानुगुणं विवाहः

शीघ्रं करणीयः' इति चिन्तयन् अस्मि । तदर्थं भवान् किञ्चित् धनसाहाय्यं करोति चेत् ...'' इति मन्दं वदन् आसीत् । तदा विकासः - ''शास्त्रविरुद्धं पुत्र्याः विवाहं कर्तुम् इच्छति किम् ? भवान् कीदृशः पिता भोः ? अहं भवादृशस्य साहाय्यं निश्चयेन न करिष्यामि'' इति उक्तवान् ।

''श्रीमन् ! किन्नरपुरस्य विशाखवर्यः अपि महान् पण्डितः अस्ति । शास्त्रेषु भवतः यावत् ज्ञानम् अस्ति ततोऽपि अधिकं ज्ञानम् अस्ति तस्य । पुत्र्याः सुखार्थं शास्त्रं धिक्कृतवतः मम धैर्यं सः अपि अभिनन्दितवान् अस्ति । अतः भवतः वचनं मयि आश्चर्यम् एव जनयति'' इति उक्त्वा कोपेन ततः निर्गतवान् भीमः ।




स्वसूचनां भीमः अन्यथा गृहीतवान् इति विकासस्य बहु खेदः अभवत् । तदा एव शशिकान्तनामकः कश्चित् तस्य समीपम् आगत्य उक्तवान् - ''अहं ग्रामात् बहिः विद्यमानं एकं गृहं क्रेतव्यमिति निश्चितवान् अस्मि । तत् बहु सुन्दरं विशालं च अस्ति । मूल्यम् अपि न्यूनम् अस्ति । किन्तु गृहस्य पृष्ठतः बहु नारिकेलवृक्षाः सन्ति'' इति ।

''नारिकेलवृक्षाः सन्ति चेत् उत्तमम् एव खलु । तेन धनम् अपि लभ्यते'' इति उक्तवान् विकासः ।

एतत् श्रुत्वा शशिकान्तः उक्तवान् - ''अस्माकं कुटुम्बस्य विषये नारिकेलवृक्षः अशुभकरः अस्ति । पूर्वम् अस्माकं वाटिकायां नारिकेलवृक्षस्य आरोपणसमये एव मम पितामहः दिवङ्गतः । पश्चात् मम पिता अपि रुग्णः अभवत् । तस्य वृक्षस्य उत्पाटनानन्तरम् एव पिता स्वस्थः अभवत् । अधुना अपि मम पिता किञ्चित् अस्वस्थः अस्ति । अतः तत् गृहं क्रेतुं मम भयं भवत् अस्ति'' इति ।

तदा विकासः हसन् उक्तवान् - ''अन्धविश्वासेन वृथा उत्तमात् अवकाशात् भवान् वञ्चितः मा भवतु । एकस्मिन् शुभे मुहूर्ते गृहं क्रीणातु । वाटिकायां विद्यमानैः नारिकेलवृक्षैः कदापि हानिः न भवति इति शास्त्रं वदति । भवतः पितुः आरोग्यार्थं नारिकेलम् उत्तमम् एव'' इति ।

शशिकान्तः तत् अनङ्गीकुर्वन् विकासं उक्तवान् - ''श्रीमन् ! भवान् एव तत् गृहं क्रीणातु । पश्चात् तान् नारिकेलवृक्षान् कर्तयतु । अनन्तरम् अहं भवत्तः गृहं क्रेष्यामि । 'वृक्षान् कर्तयित्वा एव गृहं मह्यं



ददातु' इति अहं गृहस्वामिनम् उक्तवान् । किन्तु पुत्रवत् वर्धितान् तान् वृक्षान् सः स्वयं छेत्तुं न इच्छति'' इति ।

''सः गृहस्वामी सम्यक् एव उक्तवान् अस्ति । फलदातारं कल्पवृक्षं कोऽपि कर्तयति वा ? भवादृशस्य मूर्खस्य साहाय्यम् अहम् अपि न करोमि'' इति उक्तवान् विकासः ।

''भवान् एव मां 'मूर्खः' इति वदन् अस्ति । किन्नरपुरस्य विशाखः मम पितृभक्तिं बहुधा श्लाघितवान् अस्ति'' इति उक्त्वा शशिकान्तः ततः गतवान् ।

एवमेव बहूनां मुखात् विकासः किन्नर-पुरस्य विशाखस्य नाम श्रुतवान् । अतः विशाखस्य विषयः ज्ञातव्यः इति कुतूहलम् उत्पन्नं विकासस्य मनसि । सः स्वसमीपम् आगतान् सर्वान् श्लाघते इति विचारम् अपि विकासः लक्षितवान् आसीत् । सर्वेऽपि तस्य शास्त्रज्ञानं प्रशंसन्ति स्म । अतः विशाखस्य शास्त्रज्ञानं कीदृशमिति ज्ञातव्यम् इति विकासः चिन्तितवान् । किन्नरपुरं प्रति गमनात् पूर्वं स्वस्य शास्त्रज्ञानविषये जनानाम् अभिप्रायः कः अस्ति इत्यपि ज्ञातुम् इष्टवान् विकासः । तस्मिन् एव समये अनिरीक्षिततया कश्चित् संन्यासी तस्य गृहम् आगतः ।

आगतं संन्यासिनं योग्यरीत्या सत्कृत्य विकासः तं प्रार्थितवान् - ''स्वामिन् ! अहं बहूनां शास्त्राणाम् अध्ययनं कृत्वा अधिकं ज्ञानं सम्पादितवान् अस्मि । मम शास्त्रज्ञानस्य स्तरः कीदृशः अस्ति इति भवता परीक्ष्य वक्तव्यम्'' इति ।

''शास्त्रज्ञानेन बुद्धिमत्ता वर्धते । किन्तु ततः व्यवहारज्ञानं वर्धते इति न । शास्त्रज्ञानं तु अपारम् । तथापि किमर्थं भवान् स्वस्तरं ज्ञातुम् इच्छति ?'' इति पृष्टवान् संन्यासी ।

''शास्त्रज्ञानम् अन्येभ्यः उपकारकं भवेत् इति मम इच्छा । किन्तु यस्मै कस्मै अपि तत् न रोचते । किमर्थम् इति अहं न जानामि'' इति उक्तवान् विकासः ।

तस्य वचनं श्रुत्वा हसित्वा साधुः उक्तवान् - ''सर्वेषु शास्त्रेषु व्यवहार-शास्त्रमेव मानवस्य विशेषोपकारकम् अस्ति । शास्त्राध्ययनेन स्वबुद्धिमत्तां वर्धयित्वा व्यवहारे तस्याः उपयोगः करणीयः । स्वसमीपं कोऽपि साहाय्यं याचित्वा आगच्छति चेत् तस्य उपदेशः न करणीयः, अपि तु यदि शक्यं साहाय्यं

करणीयम् । नो चेत् मौनेन स्थातव्यम् इति व्यवहारशास्त्रं वदति'' इति ।

''मूर्खाणां साहाय्यं शास्त्रज्ञैः न अङ्गीक्रियते । अतः तेषां विवेकवर्धनार्थम् अस्माभिः कर्तव्यबोधनात् ऋते किम् अन्यत् कर्तुं शक्यते ?'' इति पृष्टवान् विकासः ।

''साहाय्यं कर्तुं न शक्यते चेत् श्लाघनेन साहाय्यार्थी तोषणीयः इति व्यवहारशास्त्रं वदति'' इति उक्तवान् संन्यासी ।

विकासः संन्यासिनं संशयेन पश्यन् उक्तवान् - ''मूर्खाणां तोषणार्थम् असत्यकथनं न युक्तं खलु ? शास्त्रज्ञाः केऽपि एवं न कुर्वन्ति'' इति ।

संन्यासी तस्य वचनानि निराकृत्य - ''शास्त्रसम्मतरीत्या मूर्खाणां श्लाघनं कथं करणीयम् इति यदि भवान् ज्ञातुम् इच्छति तर्हि किन्नरपुरं गत्वा विशाखस्य व्यवहारान् अवलोकताम् । सूक्ष्मतया अवलोकनेन भवता बहवः विषयाः ज्ञायन्ते'' इति उक्तवान् ।

संन्यासिनः मुखात् अपि विशाखस्य विषयं श्रुतवति विकासे विशाखस्य दर्शनेच्छा तीव्रा जाता । सः अनुक्षणमेव प्रस्थाय किन्नरपुरं गतवान् ।

किन्नरपुरे विद्यमानेषु गृहेषु अत्यन्तं विशालतमं गृहम् आसीत् विशाखस्य । यदा विकासः तत्र प्राप्तवान् तदा विशाखः स्वगृहे एकस्मिन् विशाले प्रकोष्ठे उपविष्टवान् आसीत् । सः प्रकोष्ठः पूर्णतया रत्नकम्बलेन आच्छादितः आसीत् । विशाखस्य मुखं ज्ञानदीप्त्या प्रकाशते स्म ।



तस्य पार्श्वे देवदत्तनामकः चतुर्दशवर्षीयः युवकः उपविष्टः आसीत् । तस्य दक्षिणहस्ते एकः वेणुः आसीत् । पार्श्वे उत्पीठिकायाम् एकं पुस्तकम् आसीत् । पुरतः एव एकं विशालं कृष्णफलकम् आसीत् । पार्श्वे लघुसुधाखण्डः आसीत् ।

विशाखस्य पुरतः किञ्चिद्दूरे अनेके जनाः उपविष्टाः आसन् । तेषु कश्चित् कविः विशाखम् वदन् आसीत् - ''श्रीमन् ! प्राकृतिकशक्तयः एव मानवस्य जीवनं नियन्त्रयन्ति । ताः अभयदायिकाः सन्ति । अतः अहं प्राकृतिकविषयान् अधिकृत्य एव कविताः रचितवान् अस्मि । किन्तु अद्यपर्यन्तं मम कोऽपि लाभः न अभवत् तेन'' इति ।

अनुक्षणं विशाखः स्वपार्श्वे उपविष्टं



देवदत्तं पश्यन् - ''भोः, भवतः पुस्तके किमपि उत्तमं पद्यम् अस्ति चेत् पठतु'' इति उक्तवान् ।

तदा देवदत्तः आत्मना रचितं किञ्चित् पद्यं पठितवान्, यच्च अर्थरहितं भावरहितं च आसीत् । किन्तु विशाखः तत् श्रुत्वा - ''अहो ! कीदृशं सुन्दरं पद्यं रचितवान् अस्ति भवान् ! निश्चयेन भवान् दैवांशसम्भूतः एव । अतः एव भवतः नाम 'देवदत्तः' इति अस्ति'' इति देवदत्तस्य प्रशंसां कृत्वा, कविम् उद्दिश्य उक्तवान् - ''भोः कविवर्य ! प्रकृतिमात्रे स्वकविताः समर्पितवतः भवतः दर्शनेन अद्य अहम् आत्मानं धन्यं मन्ये । वस्तुतः भवतः कवितायाः प्रयोजनस्य विषये सम्भाषणं कर्तुं मयि अर्हता एव नास्ति'' इति ।

कविः सन्तोषेण ततः निर्गतवान् । तदनु कश्चित् कृषकः विशाखम् उद्दिश्य- ''स्वामिन् ! प्रतिवर्षं धान्यसमृद्ध्या मम गृहस्य कुसूलाः पूर्णाः भवन्ति । 'धान्यस्य मूल्यं वर्धताम्' इति प्रतीक्षमाणेन मया कदापि धान्यं विक्रेतुं न शक्तम् एव । हानिं विना कदा वा अहं मम धान्यं विक्रेतुं शक्नोमि ?'' इति पृष्टवान् ।

तदा विशाखः देवदत्तम् उक्तवान् - ''वत्स ! मम प्रेरणार्थम् एतस्य कृषकस्य चित्रं फलके लिखतु तावत्'' इति ।

देवदत्तः स्वेच्छया फलके अस्पष्ट-रेखाभिः किञ्चित् किमपि लिखितवान् । तत् चित्रं दृष्ट्वा विशाखः - ''अहो ! अद्भुतम् । दृश्यमानं चित्रं सर्वे अपि रचयितुं शक्नुवन्ति । किन्तु भवता अस्य कृषकस्य मनसि विद्यमाना अस्तव्यस्तता बहु यथार्थतया रचिता अस्ति । एतादृशं चित्रं रचयितुं भवता एव शक्यम्'' इति उक्त्वा क्षणं यावत् नेत्रे निमील्य पुनः उन्मील्य कृषकं पश्यन् - ''क्षामः यदि भवेत् तर्हि धान्यानां मूल्यं वर्धिष्यते । तदा यदि विदेशतः धान्यं निर्यातीक्रियते तर्हि अस्माकं देशस्य सुवर्णं सर्वं तत्र गच्छति । तथा न भवेत् इति मत्वा भवान् धान्यं सङ्गृहीतवान् अस्ति । सुवर्णं भवतः समीपे वा भवतु, राज्ञः समीपे वा भवतु, तत् अस्माकं देशे एव भवति खलु ? भवादृशस्य महापुरुषस्य अभिनन्दनात् ऋते अन्यत् किं वा अहं कर्तुं शक्नोमि ?'' इति उक्तवान् ।

यदा सः कृषकः सन्तोषेण बहिः गतवान्

तदा काचित् महिला उत्थाय अग्रे आगतवती । सा विशाखम् एवं पृष्टवती - ''श्रीमन् ! पुत्राणां सर्वे दोषाः क्षाम्यन्ते मया। किन्तु अन्ये केऽपि मम पुत्रेभ्यः प्रगताः भवन्ति चेत् तत् अहं सोढुं न शक्नोमि । सन्तोषेण भवितुं मया किं करणीयम् ?'' इति ।

विशाखः देवदत्तं ''वेणुं वादयतु'' इति उक्तवान् । यद्यपि देवदत्तः अपस्वरेण वेणुं वादयन् आसीत् तथापि - ''अहो ! नादस्वरूपः परमेश्वरः अपि एवं वेणुं वादयितुं न शक्नोति । वेणुवादनं करतलामलकम् इव अस्ति भवतः'' इति तम् उक्त्वा तां महिलाम् उद्दिश्य - ''अम्ब ! समग्रं विश्वम् एव स्त्रीशक्त्या पावनं जातम् अस्ति । स्वपुत्राः अन्येषां पुत्रेभ्यः प्रगताः भवेयुः इति इच्छाकरणं सर्वेषां मातॄणाम् अपि सहजमेव । किन्तु भवादृश्यः सत्य-वादिन्यः लोके विरलाः । भवत्याः मातृ-हृदयाय, सत्यगुणाय च नमो नमः । नाहम् अधिकं वक्तुं प्रभवामि'' इति उक्तवान् ।

अग्रे श्रोतुम् अनिच्छन् विकासः स्वग्रामं प्रतिप्रस्थितवान् । विशाखस्य समीपम् आगताः जनाः तस्मात् कीदृशं प्रयोजनं प्राप्नुवन्ति इत्येव न ज्ञातवान् विकासः । अतः तस्मिन् विषये संन्यासी एव प्रष्टव्यः इति निश्चितवान् सः । ग्रामस्य सीमायाम् एव विकासः संन्यासिनं दृष्टवान् । सः सन्तोषेण संन्यासिनः समीपं गत्वा आत्मना श्रुतं सर्वं तस्मै निवेद्य - ''यतिवर्य ! किमर्थं सर्वे विशाखं महापुरुषं भावयन्ति इति अहं न ज्ञातवान् । यस्मिन् कस्मिन् अपि शास्त्रे




तस्य ज्ञानम् अस्ति इति न भासते मम । अध्येतव्यानां षण्णां शास्त्राणां नामानि अपि सः जानाति उत न इति मम संशयः । कनिष्ठरूपेण तर्कस्य व्याकरणस्य च ज्ञानं भवेदेव शास्त्रज्ञस्य'' इति उक्तवान् ।

तदा संन्यासी उच्चैः हसन् - ''अहं तु मन्ये यत् सः न केवलं भवता उक्तानि शास्त्राणि, अपि तु व्यवहारशास्त्रम् अपि जानाति इति । भवान् अपि गृहं गत्वा प्रथमं व्यवहारशास्त्रस्य अध्ययनं करोतु । आगामिवर्षे अस्मिन् एव समये अहं पुनः आगमिष्यामि । भवान् जनानां मार्गदर्शनं कथं करोति इति तदा द्रक्ष्यामि'' इति उक्त्वा अग्रे गतवान् ।

इत्थं कथां निरूप्य वेतालः - ''राजन् ! विकासस्य अपेक्षया विशाखः एव परिपूर्णः

शास्त्रज्ञानी इति मन्यते संन्यासी । किम् एतत् सः सम्यक् विमृश्य निर्णीतवान् अस्ति ? आगतेभ्यः रोचताम् अथवा न रोचताम्, विकासः तु सर्वेभ्यः शास्त्रोक्ताः सूचनाः एव यच्छति स्म । विशाखः तु देवदत्तनामकं कञ्चित् मूर्खं द्वारीकृत्य प्रसङ्गानुसारं प्रयोजिकाः अप्रयोजिकाः च सूचनाः यच्छन् आगतान् सर्वान् श्लाघित्वा सन्तोष्य प्रेषयति स्म । तत् शास्त्रज्ञानम् इति कथं वा वक्तुं शक्यते ? अध्येतव्येषु शास्त्रेषु व्यवहारशास्त्रनामकम् अपि किञ्चित् शास्त्रम् अस्ति किम् ? अथवा उपहासार्थं संन्यासी विकासं तथा उक्तवान् किम् ? मम प्रश्नानाम् उत्तरं जानन् अपि भवान् यदि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भविष्यति'' इति उक्तवान् ।

तदा तिविक्रमः - ''विकासस्य विशाखस्य च समीपम् आगच्छन्तः जनाः सामान्याः गृहस्थाः एव । शास्त्ररीत्या तेषां प्रश्नानां उत्तरदानं तु व्यर्थमेव । प्रसङ्गानुसारं तेषां प्रश्नानाम् उत्तरदानम्, अथवा परिहारसूचनम् एव वस्तुतः अपेक्षितम् । शास्त्रीयम् अपि अप्रियं हानिकारकं च मार्गदर्शनं कोऽपि व्यवहारकुशलः न करोति ।

विकासस्य ज्ञानं केवलं ग्रान्थिकम् आसीत् । आगतानां मनोधर्मं, तेषां वृत्तिषु उत्पद्यमानानां समस्यानां विषयं वा सः न जानाति स्म । अतः समस्यायाः मूलम् अजानन् किमपि एकम् उत्तरं ददाति स्म सः शास्त्रस्य नाम्नि । विशाखः तु तथा न आसीत् । आगतानां जनानां समस्याः अवगत्य तेषां मनसः क्षोभम् अजनयन् लौकिकरीत्या मूर्खं देवदत्तं माध्यमीकृत्य योग्यं तृप्तिकरं परिहारं सूचयति स्म सः । संन्यासिना सूचितं व्यवहारशास्त्रं ग्रन्थरूपेण न स्यात् नाम, परं सर्वेषां शास्त्राणां सारः एव व्यवहारशास्त्रं नाम । तस्य एव अभावः विकासे अस्ति इति संन्यासी सम्यगेव अभिज्ञातवान् अस्ति । अतः विशाखः एव वस्तुतः शास्त्रज्ञानी इति निश्चितरूपेण वक्तुं शक्यते'' इति उक्तवान् ।

इत्थं वदता राज्ञा मौनस्य भङ्गः कृतः आसीत् इत्यतः शवान्तर्गतः वेतालः अनुक्षणमेव शवेन सह अदृश्यः सन् पुनः वृक्षम् आरूढवान् ।



समुद्रतीरप्रयाणम् - २३

# पुरीतः चान्दीपूर्पर्यन्तम्

**रचना - मीरानायर् ✳ चित्राणि - गोपकुमारः**




पुरीजगन्नाथदेवालयात् द्वात्रिंशत् कि.मी.दूरे सुप्रसिद्धः कोणार्कदेवालयः अस्ति । गमनमार्गे एकस्मिन् पार्श्वे अनन्तस्य बङ्गालसागरस्य नीलः जलराशिः, अपरत्र आम्रोद्यानानि, नीलगिरिवृक्षाः, रक्षितारण्यानि, तालवृक्षाः, व्रीहिक्षेत्राणि इत्यादीनि नयनानन्दकराणि सन्ति । तेनैव मार्गेण अग्रे गमनेन अद्भुतशिल्पकलायाः निमित्तं प्रसिद्धं कोणार्कदेवालयं प्राप्नुमः ।

अत्र कृषिः एव जनानां प्रधानजीविका । मत्स्यपोषणमपि ते कुर्वन्ति । बीजारोपणं, व्रीहिसस्यारोपणम् इत्यादीनि कार्याणि ते बहु श्रद्धया कुर्वन्ति । कृषिकार्यम् उत्सवं मन्यन्ते ते । सामान्यतः श्रावणपूर्णिमासमये ते बीजावपनं, सस्यारोपणं च कुर्वन्ति । तस्मिन् समये सस्यसमृद्धिः भवतु इति आशयेन लघुबालान् ते क्षेत्रे आटयन्ति ।

तीरे विद्यमानः सूर्यदेवालयः समुद्रे दूरात् एव दृश्यते । अयम् अस्माकं देशस्य महत्सु देवालयेषु अन्यतमः विद्यते । पूर्वम् अस्य औन्नत्यं ६० मीटर्परिमितम् आसीत् इति श्रूयते । तदा तस्य शिखरं समुद्रे प्रयाणं कुर्वतां नाविकानां मर्गदर्शकम् इव आसीत् । यूरोपदेशस्य नाविकाः श्वेतात् पुरीजगन्नाथदेवालयात् एतं पृथक्कृत्य अभिज्ञातुं कृष्णमन्दिरम् (ब्ल्याक् पगोडा) इति निर्दिशन्ति स्म ।

**श्रावणपूर्णिमाकाले कृषिकार्यम्**

श्रीकृष्ण-जाम्बवत्योः पुत्रः साम्बः। सः कदाचित् अपरिहार्येण चर्मव्याधिना पीडितः अभवत् । ''सर्वरोगनिवारकः सूर्यः आराधनीयः'' इति श्रीकृष्णः पुत्रम् आदिष्टवान् ।

द्वादशवर्षाणां कठिनतपसः फलरूपेण साम्बः रोगमुक्तः अभवत् । कृतज्ञतया सः सूर्याय देवालयं निर्मितवान् । कदाचित् चन्द्रभागानद्यां स्नानसमये सः कश्चित् सूर्यविग्रहं प्राप्तवान् । तमेव विग्रहम् आनीय सः देवालयस्य गर्भगृहे प्रतिष्ठापितवान् इति सूर्यदेवालयसम्बद्धा काचित् पुराणकथा ।

पुराणकालस्य अस्य देवालयस्य स्थाने एव त्रयोदशे शतके गङ्गवंशस्य लाङ्गुडनरसिंहदेवः नाम राजा इदानीन्तनं देवालयं निर्मितवान् । एतस्य देवालयस्य निर्माणार्थं १२०० जनाः शिल्पिनः द्वादश वर्षाणि यावत् अहर्निशं कार्यं कृतवन्तः इति श्रूयते ।

महान् अयं देवालयः शिल्पकलायाः केन्द्ररूपेण परिवर्तनीयः इति अस्य देवालयस्य प्रधानशिल्पिनः बिसुमहाराणस्य सङ्कल्पः आसीत् । अतः सः देवालयस्य निर्माणकार्ये मग्नः, दूरे ग्रामे विद्यमानान् पत्नीपुत्रान् विस्मृतवान् एव । प्रवृद्धः तस्य पुत्रः धर्मपादः अपि पितृवत् महाशिल्पी इति प्रसिद्धिं गतः । कदाचित् सः पितरम् अन्विष्यन् ग्रामात् प्रस्थितवान् ।

तावति काले देवालयस्य कार्यं समान्यतः समाप्तप्रायम् आसीत् । परं गणनायां जातेन केनचित् लघुदोषेण देवालयस्य शिखरे कलशं योजयितुं न शक्तवान् बिसुराणा । देवालयस्य निर्माणकार्ये विलम्बः जातः इति कारणेन राजा अपि कुपितः जातः आसीत् । तदा तत्र आगतवान् धर्मपादः गणनायां



कोणार्कस्थः सूर्यदेवालयः

जातं दोषम् अभिज्ञाय तत् सम्यक् कृत्वा समये देवलायस्य कार्यं समापयितुं साहाय्यं कृतवान् ।

अधुना देवालयस्य शिखरं नास्ति । तेन विना अपि देवालयः ४० मीटर्-उन्नतः अस्ति । चलद्भिः सप्तभिः अश्वैः युक्तस्य पुराणकालस्य सूर्यस्य रथस्य कल्पनाम् अनुसृत्य अयं देवालयः निर्मितः अस्ति । सप्त अश्वाः सप्त दिनानि सूचयन्ति । द्वादश चक्रयुगलानि द्वादश मासान् अथवा वर्षस्य २४ पक्षान् प्रतिपादयन्ति । चक्रे विद्यमानानि अराणाम् अष्ट युगलानि एकस्य दिनस्य अष्ट प्रहरान् सङ्केतयन्ति । पूर्वं तेषां चक्राणां च्छायां दृष्ट्वा जनाः समयं जानन्ति स्म सूर्यघटीं दृष्ट्वा इव इति श्रूयते । केषाञ्चित् शतकानाम् अनन्तरं पर्यवेक्षकाणाम् अभावेन देवालयः सिकतासु निलीनः अभवत् । तेन शिथिलः अपि अभवत् । अस्य शतकस्य आरम्भे केषाञ्चित् दृष्टिगोचरम् अभवत् अस्य औन्नत्यम् । सिकतानाम् अपसारणेन शिथिलः अयं सुन्दरः देवालयः पुनश्च प्रकाशितः अभवत् । अद्य इदं विश्वस्य प्रसिद्धेषु प्रवासकेन्द्रेषु अन्यतमम् अस्ति इति युनेस्कोप्रकटनात् ज्ञायते ।

इतः पुनः किञ्चिद्दूरम् उत्तरदिशि गमनेन देशस्य प्रसिद्धेषु नौकास्थानेषु अन्यतमं पारादीपनगरं प्राप्नुमः । स्वतन्त्रभारते पूर्वतीरे निर्मितं प्रथमं नौकास्थानं पारादीप् । मनोहरेण समुद्रतीरेण युक्तम् इदं नगरं प्रवासकेन्द्रम् इत्यपि प्रसिद्धं जातम् अस्ति । दक्षिण-अमेरिका-इत्यादिभ्यः दूरप्रदेशेभ्यः सहस्राधिकाः समुद्रकूर्माः प्रतिवर्षम् अण्डं स्थापयितुम् अत्र आगच्छन्ति ।

इतः इतोऽपि किञ्चित् उत्तरे विद्यमानं गहीरमट्ट समुद्रतीरं प्रति विश्वे एव अत्यधिकसंख्यायां समुद्रकूर्माः आगच्छन्ति । प्रतिवर्षं जनवरि-फेब्रवरि मासयोः सामान्यतः दशलक्षं समुद्रकूर्माः अण्डं



स्थापयित्वा, उष्णतां दत्त्वा रक्षित्वा शावकान् उत्पादयितुम् एतत् तीरम् आगच्छन्ति । आलिव् रिड्ले जातीयाः त्रिलक्षकूर्माः अत्र प्रतिवर्षम् आगच्छन्ति, येषां सन्ततिः नाशदशां गच्छन्ती अस्ति इति भाव्यते । एते सामान्यतः १० कि.मी.विशाले स्थले एव भवन्ति ।



बाघूजाटिन्

इतः पुनः किञ्चित् उत्तरे अस्ति बालासार्नगरम्, यच्च पूर्वं बालेश्वर् इति प्रसिद्धम् आसीत् । क्रि.श.१६४२ तमे वर्षे ब्रिटिष्जनाः अत्र वाणिज्यार्थं नौकास्थानं निर्मितवन्तः । बाघू.जाटिन् इति प्रसिद्धः क्रान्तिकारिणां प्रमुखः जतीन्द्रनाथमुखर्जीवर्यः अत्रैव ब्रिटिष्जनानां गुलिकास्त्रस्य आहुतिः अभवत् । जर्मनीतः आगतायाः मेवरिक्-नामिकायाः नौकातः अस्त्राणि स्वीकर्तुं सः क्रि.श.१९१५तमे वर्षे बालासार्नगरम् आगतः आसीत् । तदा एव आरक्षकाः गुलिकास्त्रेण तं मारितवन्तः ।

बालासार्मण्डले एव विद्यमानं चान्दिपूरनामकं नौकास्थानं स्वस्य सुन्दरेण समुद्रतीरेण प्रसिद्धिं गतम् अस्ति । विरलैः तरङ्गैः युक्तम् इदं समुद्रतीरं सामान्यतः पञ्च कि.मि.दीर्घम् अस्ति । पूर्णिमायाः रात्रौ इदं तीरं रजतवत् प्रकाशते । अतः एव चान्दिपूर् (रजतपुरम्) इति नाम आगतम् अस्ति एतस्य ।

कूर्माणां प्रसूतिकालः



# महाशिल्पी

सहस्त्रवर्षेभ्यः पूर्वं कस्मिंश्चित् ग्रामे महाशिल्पी कश्चित् आसीत् । तेन अनेकानि सभाभवनानि मन्दिराणि च निर्मितानि आसन् । केषुचित् एव दिनेषु सः देशविदेशेषु प्रसिद्धः जातः आसीत् ।

तस्मिन् समये एव नागलोके नागराजस्य प्रासादभित्तिः भूकम्पात् विदीर्णा जाता । एतस्य पुनर्निर्माणार्थं भूलोकस्य एषः महाशिल्पी आह्वातव्यः इति नागराजः निर्णीतवान् । तां वार्तां ज्ञातवान् शिल्पी 'बृहतः प्रासादस्य निर्माणं कर्तुं मया अवकाशः प्राप्तः' इति चिन्तयन् सन्तोषेण नागलोकं गतवान् ।

केषुचित् एव दिनेषु नागराजस्य शिल्पिनः च मैत्री गाढा जाता । नागराजस्य परिवारेण कुटुम्बजनैः च सह तस्य उत्तम-बान्धव्यं सम्पन्नम् । भोजन-वसत्यादीनां विषये किञ्चिद् अपि लोपः न अनुभूतः तेन । तथापि गच्छता कालेन गृहस्य स्मरणम् अधिकं जातं तस्य । वैभवपूर्ण-परिसरे जीवनं कुर्वन् अपि सः लघुगृहे वसतां पत्न्यादीनां स्मरणतः पीडितः जातः । तेषां परिस्थितिः कथम् अस्ति इति ज्ञातव्यम् इति प्रबला इच्छा उत्पन्ना तस्य मनसि ।

एकस्मिन् दिने शिल्पी नागराजम् उद्दिश्य - ''राजन् ! एतेषु दिनेषु मम गृहस्य स्मरणं पुनः पुनः भवति । मम ग्रामस्य परिस्थितिः कथम् अस्ति इति कृपया विचार्य वदति वा ?'' इति पृष्टवान् ।

सत्यम् एव वदामि इति चिन्तितवान् नागराजः उक्तवान् - ''भवतः ग्रामपरिसरे बहुदिनेभ्यः वृष्टिः न आगता । तत्र दुर्भिक्षः आपतितः अस्ति'' इति ।

''तर्हि तत्र वृष्टिं करोतु'' इति उक्तवान् शिल्पी ।

''तत् असाध्यम् । कस्मिन् स्थले कदा

'पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा'




दुर्भिक्षः भवेत् इति सर्वं पूर्वम् एव निश्चितं भवति । इतोऽपि नवनवतिदिनानि यावत् भवतः ग्रामे दुर्भिक्षः भविष्यति'' इति उक्तवान् नागराजः ।

तस्य वचनं श्रुत्वा शिल्पी महतीं चिन्तां प्राप्तवान् । मम ग्रामीणाः बन्धुमित्राणि च आहारेण विना बहु कष्टम् अनुभवन्तः सन्ति इति भावना तस्य मनसि आगता । 'ते सर्वे आहारस्य अभावात् शुष्कपर्णानि खादन्तः म्रियमाणाः सन्ति ' इति ऊहा कृता शिल्पिना ।

''नागराज ! भवन्तं प्रार्थयामि । अस्माकं ग्रामे वृष्टिं करोतु । जलाभावात् मम ग्रामस्य जनाः बहु कष्टम् अनुभवन्तः मरणं प्राप्नुवन्ति'' इति उद्वेगमिश्रितस्वरेण उक्तवान् शिल्पी ।

''महाशिल्पिन् ! तेषां विषये किमर्थं चिन्तयति भवान् ? मम गृहस्य कार्यं समापयतु । ततः अहं भवते प्रभूतं धनं पारितोषिकरूपेण दास्यामि । यावत् इच्छति तावत् रत्नानि, सुवर्णरजतादीनि च दास्यामि । ततः भवान् आजीवनं राजभोगम् अनुभवितुं शक्नोति'' इति उक्तवान् नागराजः ।

''मह्यं तु वृष्टिः एव आवश्यकी, न तु धनम् । अस्माकं ग्रामे सर्वेषाम् अपि वृष्टेः आवश्यकता अस्ति । यदि भवतः जनाः एव एतस्मिन् परिस्थितौ अभविष्यन् तर्हि भवान् निश्चिन्ततया अस्थास्यत् किम्?'' इति खेदेन पृष्टवान् शिल्पी ।

''माम् अनावश्यकरूपेण न कोपयतु । इदानीं वृष्टिः सर्वथा न भविष्यति'' इति उक्त्वा ततः निर्गतवान् नागराजः ।

शिल्पी गृहगमनार्थं सन्नाहम् आरब्धवान् ।

एतं विषयं ज्ञातवान् नागराजः शिल्पिनः समीपम् आगत्य -''निष्कारणं किमर्थं कुपितः भवति भवान् ?'' इति पृष्टवान् ।

''तथा न नागराज ! ग्रामं गत्वा तत्रत्या परिस्थितिः मया ज्ञातव्या एव अस्ति'' इति उक्तवान् शिल्पी ।

''कः तत्रः ? एतं दुष्टं बध्नन्तु तावत्'' इति सेवकान् आज्ञापितवान् नागराजः । अनुक्षणं तस्य सेवकाः शिल्पिनं परितः स्थितवन्तः ।

''इदानीं वदतु । भवान् मम प्रासादस्य समीकरणं समापयति उत न ?'' इति पृष्टवान् नागराजः ।

''भवान् मम ग्रामे वृष्टिं करोति उत न इति वदतु आदौ'' इति प्रतिप्रश्नं कृतवान् शिल्पी ।

''तत् कार्यं न करोमि इति पूर्वमेव उक्तवान् अस्मि किल ?'' इति उक्तवान् नागराजः ।

''तर्हि एतत् कार्यम् अहम् अपि न करोमि'' इति उक्तवान् शिल्पी ।

''एतं नीत्वा एतस्य शिरः...'' इति उक्त्वा वचनं स्थगितवान् नागराजः । 'एतस्य शिरच्छेदः यदि भटैः क्रियते तर्हि मम प्रासादस्य समीकरणं स्थगितं भविष्यति' इति स्मृत्वा अनुक्षणं सः - ''एतं शिल्पिनं त्यजन्तु'' इति दीर्घं निःश्वसन् उक्तवान् ।

एतेन शिल्पिनः प्राणाः रक्षिताः । किन्तु तस्य परिस्थितिः तु उत्तमा न जाता । तं नागलोकात् बहिः गन्तुं न त्यक्तवन्तः नागभटाः । तस्य ग्रामे दुर्भिक्षपीडा तु अनुवर्तमाना एव आसीत् । शिल्पी एकदा एकत्र उपविश्य 'अग्रे किम्' इति यदा चिन्तयन् आसीत् तदा तस्य दृष्टिः प्रासादस्य एकस्य महास्तम्भस्य उपरि अपतत् । शिल्पी अनुक्षणम् उत्थाय तं स्तम्भं क्रकचेन कर्तयितुम् उद्युक्तः अभवत् । स्तम्भे कम्पनम् आरब्धम् । तदा नागराजः धावन् आगत्य - ''स्थगयतु ! स्थगयतु कृपया'' इति प्रार्थितवान् ।

''तर्हि वृष्टिं करोतु भवान् मम ग्रामे'' इति उक्तवान् शिल्पी ।

''वृष्टिं करोमि, वृष्टिं करोमि'' इति उक्तवान् नागराजः ।

''वृष्टिं करोमि इति उक्त्वा अतिवृष्टिं न करोतु । यावत् आवश्यकं तावदेव भवेत् वृष्टिः । स्मरतु तावत्'' इति उक्तवान् शिल्पी ।



नागराजः स्वस्य उत्तरीयेण एव शिल्पिनम् आच्छाद्य – ''भवान् ग्रामं गत्वा सुभिक्षयुक्ततां दृष्ट्वा आगच्छतु'' इति उक्तवान् ।

शिल्पी भूलोकम् आगतवान् । सः स्वग्रामे जातां वृष्टिं, तेन सन्तुष्टान् जनान् च दृष्टवान् । परन्तु ग्रामजनानां दृष्टिगोचरः न जातः सः । ग्रामजनाः तस्मिन् अवसरे केवलम् एकं सर्पं दृष्टवन्तः, तावदेव ।

''हन्त ! कियान् महान् सर्पः'' इति सर्वे आश्चर्यसूचकानि वचनानि उक्तवन्तः ।

''एतेन सर्पेण एव वृष्टिः आनीता । एतस्मै एकं देवालयं निर्मास्यामः'' इति चिन्तितवन्तः ते एकस्य देवालयस्य निर्माणम् अपि कृतवन्तः । ततः ग्रामः सुभिक्षः जातः ।

शिल्पी नागलोकं गत्वा नागराजम् उद्दिश्य – ''मां वञ्चयित्वा सर्परूपेण भवान् प्रेषितवान् । तान् द्रष्टुं केवलं शक्तवान् अहं, परन्तु सम्भाषितुं न'' इति उक्तवान् ।

''भवान् दुराग्रही अस्ति । अतः एव अहं जागरूकताम् आश्रितवान् । इदानीम् अहं मम वचनं पालितवान् । भवान् स्वस्य कार्यं पूर्णं करोतु'' इति उक्तवान् नागराजः ।

शिल्पी स्ववचनानुसारम् अत्यन्तं सुन्दरं प्रासादं निर्मितवान् । प्रासादप्रवेशार्थम् आगतस्य इन्द्रस्य मनसि अपि असूया उत्पन्ना । नागराजः शिल्पिने प्रभूतम् ऐश्वर्यादिकं दत्त्वा तं गृहं प्रेषितवान् ।

तस्य परिचिताः तं दृष्ट्वा – ''एतावन्ति दिनानि कुत्र गतवान् आसीत् भवान् ? अत्र कीदृशः दुर्भिक्षः आसीत् इति भवान् जानाति किम् ? कश्चित् देवसर्पः वृष्टिकारणं जातः । तस्य कृते एकं देवालयं निर्मितवन्तः वयम् । परन्तु इदानीं सः सर्पः कुत्रापि गतवान् अस्ति'' इति उक्तवन्तः ।

''अहम् एव सर्पः आसम्'' इति उक्तवान् शिल्पी ।

अनेकजनाः तस्य वचने न विश्वसितवन्तः। सः ग्रामे सर्वान् उद्दिश्य स्वस्य अनुभवान् उक्तवान् । तदा ते न केवलं एतस्य वचने विश्वासं प्रदर्शितवन्तः, अपि च एतस्य विषये बहु अभिमानं प्रदर्शितवन्तः ।

तदनन्तरं सः ग्रामः 'नागपुर' नाम्ना प्रसिद्धः अभवत् ।



THEY STOOD UP TO THE BRITISH!

1

# मीर खासिम्

STORY : MEERA UGRA
PICTURES : GOUTAM SEN

१७५७ तमे वर्षे जून् २३ तमे दिनाङ्के प्लासियुद्धस्य अनन्तरं ब्रिटिष् ईष्ट् इण्डिया संस्थया बङ्गालस्य शासकानां निर्णयार्थम् अधिकारः लब्धः । राज्ञः सिराज्-उ-द्धौलस्य द्रोहं कृतवन्तं सेनानायकं मीर्जाफरं संस्था बङ्गालस्य शासकत्वेन नियुक्तवती । पश्चात् क्रि.श. १७६० तमे वर्षे मीर्जाफरं निवार्य तस्य स्थाने तदीयं जामातरं मीर्खासिमं नियुक्तवती सा ।








आक्ट्राय्शुल्कस्य दानं निराकृतवन्तः संस्थायाः अधिकारिणः ।




एतेन संस्था स्थानीयानाम् अपेक्षया न्यूनमूल्येन वस्तूनि विक्रेतुं शक्ता ।







केचन वणिजः मीर्खासिमस्य समीपं गत्वा यदा एतं विषयम् उक्तवन्तः - - -




एतं विषयम् उल्लिखन् मीर्खासिमः संस्थायै पत्रं लिखितवान् । किन्तु तस्य उत्तरं तु न प्राप्तम् ।



मीर्खासिमः वाणिज्यशुल्कस्य, स्थानीयकरस्य च सङ्ग्रहं स्थगितवान् ।

तेन आंग्लाः कुपिताः ।




मीर्खासिमः स्वस्य आज्ञायाः प्रतिस्वीकरणं न अङ्गीकृतवान् ।







आंग्लानां कार्यागाराणां अधिकारिणः एल्लिसवर्यस्य नायकत्वे ब्रिटिषसेना क्रि.श. १७६३तमे वर्षे जून् २१तमे दिनाङ्के पाटनानवाबस्य दुर्गम् आक्रान्तवती ।



मीरखासिमः स्वसेनया सह गत्वा एल्लिस्वर्यस्य रक्षणासेनां बद्धवान् ।




किन्तु अनन्तरं प्रवृत्ते युद्धे मीर-खासिमस्य सेना पराजयं प्राप्तवती ।




क्रि.श. १८६४ तमे वर्षे अक्टोबर् २२तमे दिनाङ्के प्रवृत्ते बक्सर्युद्धे मीर्खासिमस्य तस्य मित्राणां च सेना पराजयं प्राप्तवती ।



आत्मनः प्राणरक्षणार्थं पलायितवान् मीरखासिमः देहलीं गतः । तत्र सः आंग्लेभ्यः आत्मानं रक्षन् शेषं जीवनं यापितवान् ।

द्वितीयः षा-अलमः १८६५तमे वर्षे आगस्ट् १२ दिनाङ्के ओरिस्सा-बंगाल-बिहार-राज्यानि औपचारिकतया संस्थायै उपहारत्वेन दत्तवान् ।



बङ्गालस्य उपरि पुनः आक्रमणम् अभवत् । क्रि.श. १८६९ तमे वर्षे मे-सासस्य २० तमे दिनाङ्के रिचर्ड-बेचर्नामकः संस्थायाः उन्नतः अधिकारी कश्चित् रहस्यसमित्याः निर्देशकाय एवं लिखितवान् अस्ति – ''संस्था उपायनत्वेन अत्रत्यान् भूभागान् प्राप्तवती । तदनन्तरं एव अस्य देशस्य प्रजानां परिस्थितिः इतोऽपि शोचनीया जाता अस्ति । समृद्धः देशः दुर्गतिमार्गे अस्ति'' इति ।




अनन्तरदिने प्रभाते एव कीचकः प्रासादम् आगत्य द्रौपद्या मिलित्वा ताम् उद्दिश्य – ''अये, ह्यः मम पराक्रमः दृष्टः खलु भवत्या ? राजसभायां भवती मया पादेन प्रहृता चेदपि केनापि आक्षेपः न कृतः । अयं विराटः नाममात्रेण राजा । पूर्णा सेना तु मम वशे एव अस्ति । वस्तुतः अहम् एव राजा अस्मि । तादृशेन मया सेविष्यमाणा भवती आत्मानं धन्यां भावयतु । भवत्यै प्रत्यहं शतं सुवर्णनाणकानि दास्यामि । भवत्याः सेवार्थं शताधिकान् सेवकान् सेविकाः च नियोजयिष्यामि । भवत्यै एकं सुन्दरं रथम् अपि दास्यामि । कृपया मयि प्रसन्ना भवतु भवती'' इति पुनः पुनः याचितवान् ।

''यदि भवान् माम् अपेक्षते तर्हि भवता मया उच्यमानाः नियमाः अवश्यम् अङ्गीकरणीयाः । एषः विषयः राजसभां प्रति कदापि न गच्छेत् । भवतः अनुजाः अपि न जानीयुः । रहस्योद्घाटनं भवति चेत् गन्धर्वाः विषयं जानन्ति इत्येव भयं मम । अतः मम नियमम् अङ्गीकरोति चेत् अहं भवतः वशा भविष्यामि'' इति उक्तवती द्रौपदी ।

तदा कीचकः उक्तवान् – ''भवती चिन्तां मा करोतु । गन्धर्वाः अपि यथा न जानीयुः तथा रहसि अहं भवत्याः समीपम् आगमिष्यामि'' इति ।

तत् श्रुत्वा द्रौपदी उक्तवती – ''नृत्यशालायां रात्रौ कोऽपि न भवति । अन्धकारः यदा गाढः भवति तदा भवान् तत्र आगच्छतु । आवयोः तत्र मेलनं केनापि न ज्ञायते'' इति ।

पश्चात् द्रौपदी तत् सर्वं भीमम् उक्तवती ।

मूर्खः कीचकः 'सैरेन्ध्र्याः आह्वानं नाम मृत्योः स्वागतीकरणम्' इति न ज्ञातवान्



एव । सन्तोषे निलीनः सः तत् दिनं कथम् अतीतम् इत्येव न ज्ञातवान् ।

अपरत्र भीमे अपि कीचकस्य वधविषये महान् उत्साहः दृष्टः । सः द्रौपदीम् उद्दिश्य - ''प्रिये ! यदि अहं तं रहसि हन्तुं न शक्नोमि तर्हि सर्वेषां पुरतः एव तं मारयिष्यामि । ततः साक्षात् गत्वा दुर्योधनम् अपि मारयिष्यामि । धर्मराजः अत्रैव विराटस्य सेवां कुर्वन् वसतु नाम'' इति उक्तवान् वीरावेशेन ।

द्रौपदी तस्य कोपं शमयन्ती उक्तवती - ''भवतु । तद्विषये अग्रे चिन्तयिष्यामः । अधुना भवान् रहसि एव तं कीचकं मारयतु । एतेन प्रकारेण कार्यं साधितं चेत् केऽपि अस्मान् न अभिजानन्ति'' इति ।

''भवत्या उक्तमपि युक्तमेव अस्ति । अद्य रात्रौ सः यथा मां न अभिजानीयात् तथा तं मारयिष्यामि'' इति उक्तवान् भीमः ।

तस्यां रात्रौ हरिणस्य आगमनं निरीक्षमाणः व्याघ्रः इव भीमः कीचकं निरीक्षमाणः नृत्यशालायां जागरूकः सन् उपविष्टवान् ।

कीचकः अपि विविधैः विभूषणैः आत्मानम् अलङ्कृत्य शीघ्रमेव सैरन्ध्रीं द्रष्टुकामः नृत्यशालां प्रविष्टवान् । भीमः मञ्चे शयानः आसीत् । कीचकः हस्तेन तं स्पृशन् - ''प्रिये ! मम अन्तःपुरस्य स्त्रियः मां त्रिपुरसुन्दरं मन्यन्ते । शताधिकाः दास्यः मम सेवार्थं सदा सज्जाः भवन्ति तत्र । ताः अन्तःपुरं सुन्दरतया अलङ्कृत्य मम प्रतीक्षायाम् एव भवन्ति । तादृशः अहम् अस्मिन् घनान्धकारे भवत्याः निमित्तम् अत्र आगतः अस्मि'' इति उक्तवान् ।

तदा भीमः - ''भवान् सुन्दरः इति विषये नास्ति संशयः । तथैव भवान् एतादृशं स्पर्शानुभवम् अपि ऐदम्प्राथम्येन प्राप्तवान् इति विषये अपि नास्ति संशयः'' इति वदन् मञ्चात् उत्थाय - ''सिंहः गजम् इव अहं भवन्तं मारयिष्यामि । अद्य भवतः पीडातः सैरन्ध्र्याः मुक्तिः'' इति वदन् कीचकस्य शिखां गृहीत्वा आकृष्टवान् ।

कीचकः स्वशिखां मोचयित्वा भीमेन सह युद्धम् आरब्धवान् । जेतव्यमिति द्वौ अपि परस्परं हस्ताभ्यां प्रहरन्तौ नखैः नखन्तौ, दन्तैः दशन्तौ च भीकररूपेण युद्धं कृतवन्तौ । कीचकेन पूर्णशक्त्या ताडिते सत्यपि भीमः स्तम्भवत् तथैव तिष्ठति स्म ।

तयोः घोरयुद्धेन नृत्यशाला कम्पिता जाता ।

युद्धसमये भीमः पादेन प्रहृत्य कीचकं पातितवान् । पतितस्य अचलस्य कीचकस्य वक्षःस्थलं बलेन प्रहृतवान् भीमः । अनन्तरं तम् उन्नीय सम्यक् भ्रामयित्वा तस्य गलं निपीडितवान् सः । अन्ते जङ्घया तं प्रहरन् मृगं सिंहः यथा तथा निर्दयं मारितवान् । पश्चात् तस्य हस्तं पादं शिरः च शरीरस्य अन्तः पूरयित्वा मांसपिण्डमिव कृत्वा क्षिप्तवान् ।



तादृशं कीचकस्य शवं भीमः द्रौपदीं प्रदर्श्य - ''भवतीम् अपेक्षितवतः सर्वस्य अपि एतादृशी एव गतिः भविष्यति'' इति उक्त्वा पाकशालां प्रति गतवान् ।

अनन्तरं द्रौपदी नृत्यशालायाः रक्षकान् उत्थाप्य - ''नृत्यशालायां गन्धर्वाः कीचकं मारितवन्तः सन्ति । गत्वा पश्यन्तु'' इति उक्तवती । आश्चर्यम् अनुभवन्तः ते दीपं गृहीत्वा धावन्तः गत्वा नृत्यशालां प्रविश्य भीकरतया दृश्यमानं विकृतं कीचकस्य शवं दृष्ट्वा हस्तपादादिकं किम् इत्येव न अभिज्ञातवन्तः ।

तदा तत्रैव विद्यमानाः कीचकस्य बान्धवाः रोदनम् आरब्धवन्तः । पिण्डीभूतं कीचकस्य शवं दृष्ट्वा ते कम्पिताः । शवं संस्कारार्थं नयन्तः उपकीचकाः स्तम्भम् आश्रित्य स्थितवतीं द्रौपदीं दृष्टवन्तः ।

'एतस्याः निमित्तम् एव अस्माकम् अग्रजः प्राणान् त्यक्तवान् । अतः शवेन सह एताम् अपि दहामः चेत् तस्य आत्मनः तृप्तिः भविष्यति' इति विचिन्त्य विराटस्य अनुमतिं प्रार्थितवन्तः । निराकरणात् भीतः विराटः तेभ्यः अनुमतिं दत्तवान् ।

उपकीचकाः कीचकस्य शवेन सह द्रौपदीं बद्ध्वा श्मशानं प्रति प्रस्थितवन्तः । मार्गे द्रौपदी - ''भोः जय !, जयन्त !, विजय !, जयत्सेन !, जयद्बल !, एते कीचकाः मां बद्ध्वा नयन्तः सन्ति । मां रक्षन्तु'' इति उच्चैः स्वपतीन् तेषां रहस्यनामभिः आहूतवती ।

तदा एव शयितवान् भीमः द्रौपद्याः आक्रन्दनं श्रुत्वा उत्थाय - ''सैरन्ध्रि ! भयं मास्तु । एषः अहम् आगच्छन् अस्मि'' इति उच्चैः उक्त्वा वेशं परिवर्त्य दुर्गस्य भित्तिम् उल्लङ्घ्य श्मशानं प्रति धावितवान् ।

तेन श्मशानं यावत् प्राप्तं तावता चिता सज्जीकृता आसीत् । भीमः तत्र गत्वा एकं महावृक्षं समूलम् उत्पाट्य तेनैव सर्वान्



प्रहृतवान् ।

तं दृष्ट्वा सर्वे - ''अहो ! गन्धर्वः आगतः'' इति वदन्तः द्रौपदीं तत्रैव परित्यज्य नगराभिमुखं धावितवन्तः । भीमः तान् पञ्चाधिकशतं जनान् अनुसृत्य मारितवान् । पश्चात् प्रत्यागत्य द्रौपदीं मोचयित्वा - ''भवती निश्चिन्ता अन्तःपुरं गच्छतु । अहं पाकशालां प्रति गमिष्यामि'' इति उक्तवान् ।

शवरूपं प्राप्य काष्ठवत् पतितान् उपकीचकान्, अन्तःपुरं गच्छन्तीं सैरन्ध्रीं च दृष्ट्वा जनाः विराटराजस्य समीपं गत्वा - ''महाराज ! सैरन्ध्र्याः कारणेन एव सर्वे कीचकाः परलोकं गतवन्तः सन्ति । सा पुनः नगरं प्रत्यागच्छन्ती अस्ति । सा बहु रूपवती अस्ति । तस्याम् अनुरागं प्राप्नुवतां सर्वेषाम् एषा एव गतिः भविष्यति । तथा सति अस्माकं नगरस्य एव नाशः भविष्यति । अस्याः कारणेन अस्माकं कापि हानिः यथा न स्यात् तथा भवता करणीयम्'' इति उक्तवन्तः ।

एकस्यां चितायाम् एव सर्वेषां कीचकानां दहनव्यवस्थां कारयित्वा विराटराजः पत्न्याः सुदेष्णायाः समीपं गत्वा - ''केनापि उपायेन एतां सैरन्ध्रीं भवती इतः प्रेषयतु । 'तस्याः पतयः गन्धर्वाः क्लेशं जनयेयुः' इति भीतिः मम । 'साक्षात् ताम् एव एतं विषयं निवेदयितुम् अशक्नुवन् भवत्याः द्वारा अहं सूचयन् अस्मि' इत्यपि तां सूचयतु'' इति उक्तवान् ।

सचेलस्नानं कृत्वा प्रत्यागच्छन्तीं द्रौपदीं दृष्ट्वा गन्धर्वाणां भयेन केचन पलायनं कृतवन्तः । अन्ये केचन हस्ताभ्यां नेत्रे पिहितवन्तः ।

यदा सा पाकशालासमीपम् आगतवती तदा भीमः द्वारस्य समीपे मदगजः इव स्थितवान् आसीत् । तं दृष्ट्वा द्रौपदी मन्दम् उक्तवती - ''मां रक्षितवते गन्धर्व-सार्वभौमाय नमो नमः'' इति ।

''भवत्याः सेवाकांक्षिणः ये अत्र अटन्ति स्म ते सर्वे मोक्षं प्राप्तवन्तः सन्ति'' इति भीमः उक्तवान् विनोदेन ।

ततः द्रौपदी नृत्यशालासमीपं गतवती । तत्र राजकुमारीः नृत्यं पाठयन्तम् अर्जुनं दृष्टवती । गच्छन्तीं द्रौपदीं दृष्ट्वा अर्जुनः राजकुमार्यः च तस्याः समीपम् आगत्य महतीम् आपदं तीर्णवतीं ताम् अभिनन्दितवन्तः ।

''सैरन्ध्रि ! कथं भवती रक्षिता ? ते दुष्टाः कथं मृताः ?'' इति अर्जुनः द्रौपदीं पृष्टवान् ।

''हे बृहन्नले ! अधुना सर्वं पृच्छति किम् ? पूर्वमेव ज्ञातं चेदपि भवती किं वा अकरिष्यत् ? अन्तःपुरे महिलाभिः सह सुखेन जीवन्ती एतां विस्मृतवती भवती अधुना विवरणं प्रष्टुम् आगता अस्ति खलु ?'' इति उपहासमिश्रितेन स्वरेण पृष्टवती द्रौपदी ।

''अये सैरन्ध्रि ! मां तादृशीं निर्दयां मन्यते किं भवती ? सख्याः भवत्याः दुःखं भवति चेत् मम दुःखं न भवति किम् ? एकस्य मनः अपरः कथं वा ज्ञातुं शक्नोति ?'' इति खेदेन उक्तवान् अर्जुनः ।

ततः द्रौपदी राजकुमारीभिः सह यदा अन्तःपुरं प्राप्तवती तदा सुदेष्णा पत्युः सूचनानुसारं ताम् उक्तवती - ''भोः सैरन्ध्रि ! भवतीतः, भवत्याः पतिभ्यः गन्धर्वेभ्यः च महाराजः नितरां भीतः अस्ति । भवत्याः रूपं दृष्ट्वा सर्वे मोहिताः भवन्ति । तदा कुपिताः गन्धर्वाः सर्वान् मारयन्ति च । अतः कृपया भवती इतः अन्यत्र कुत्रापि गच्छतु । एषा महाराजस्य सूचना'' इति ।

''हे मातः ! इतःपरं केवलं त्रयोदश दिनानि यावत् मह्यम् आश्रयः दातव्यः इति भवती पतिं मत्परतया प्रार्थयतु । अनन्तरं गन्धर्वाः मां नेष्यन्ति । पश्चात् महाराजः, तस्य बान्धवाः, मित्राणि च सुखेन जीवितुं शक्नुवन्ति'' इति प्रार्थितवती द्रौपदी ।

'महावीरः कीचकः तस्य सर्वैः अनुजैः सह मृतः' इति वार्तां श्रुत्वा विराटनगरस्य प्रजाः सर्वाः बहु खिन्नाः अभवन् । कस्याश्चित् महिलायाः कारणेन कीचकः गन्धर्वैः मारितः इति वार्ता सर्वत्र देशे



विदेशेषु च प्रसृता ।

अपरत्र तस्मिन् एव समये दुर्योधनस्य गूढचराः पाण्डवान् अन्विष्यन्तः अनेकान् देशान्, पर्वतान्, यात्रास्थानानि, ग्रामान् च अटित्वा हस्तिनापुरं प्रत्यागत्य - ''पाण्डवाः कुत्रापि न दृष्टाः । प्रायः ते मृताः स्युः'' इति वदन्तः विशेषवार्ता इति कारणेन - ''कीचकाः गन्धर्वैः मारिताः । किन्तु आश्चर्यं नाम गन्धर्वान् केऽपि न दृष्टवन्तः'' इति उक्तवन्तः ।

गूढचराणां वार्तां श्रुत्वा दुर्योधनः सभ्यान् उक्तवान् - ''पाण्डवानाम् अज्ञातवासस्य अवधिः अल्पेषु दिनेषु एव समाप्यते । अवधेः समाप्तितः पूर्वम् एव ते अस्माभिः अभिज्ञास्यन्ते चेत् ते पुनः द्वादश वर्षाणि वनवासार्थं गमिष्यन्ति । अतः केनाऽपि उपायेन तेषाम् अन्वेषणं करणीयम् । मम मनसि कोऽपि उपायः न स्फुरति । भवन्तः एव कमपि उपायं सूचयन्तु'' इति ।

कर्णः दुःशासनादयः च - ''पुनः गूढचरान् प्रेषयतु'' इति उक्तवन्तः ।

''पाण्डवाः निश्चयेन जीवन्ति एव । तेषाम् विषयं ये सम्यक् जानन्ति तादृशान् चारान् एव प्रेषयतु अन्वेषणार्थम्'' इति उक्तवान् द्रोणः ।

भीष्मः अपि पाण्डवाः जीवन्ति एव इति निश्चित्य - ''धर्मराजः यत्र भवति तत्र सर्वदा सुभिक्षः भवति । तत्र प्रजाः तृप्त्या धर्ममार्गेण जीवनं यापयन्ति । तत्र पर्जन्यः काले वर्षति । तादृशः देशः कः अस्ति इति अन्वेषणं कुर्वन्तु'' इति उक्तवान् ।

भीष्मस्य वचनम् अङ्गीकुर्वन् कृपाचार्यः दुर्योधनम् उक्तवान् - ''भीष्मेण उक्तमपि युक्तमेव । एकत्र पाण्डवानाम् अन्वेषणं प्रचलतु नाम । अपरत्र अस्माभिः युद्धस्य सज्जता अपि करणीया अस्ति । अज्ञातवासं समापयन्ति चेत् पाण्डवाः राज्यार्थं युद्धं करिष्यन्ति एव । अतः अस्माभिः ततः पूर्वम् एव अस्माकं सेनाबलं, धनबलं च वर्धनीयम् अस्ति । साम-दानादिभिः उपायैः बलिष्ठाः, दुर्बलाः च अस्माकं पक्षं प्रति आनेतव्याः । तदा एव पाण्डवान् जित्वा भवान् सुखेन राज्यसुखं भोक्तुं शक्नोति'' इति ।

- (अनुवर्तते)



# रसवार्ता



## रेवरेण्ड् स्पैडर्मेन्

कामिक्स्पुस्तकस्य स्पैडर्मेन्पात्रधारिणा क्रियमाणं भित्तीनाम् आरोहणम्, प्राकारभित्तौ चलनम् इत्यादिकं तु अत्यन्तं सरलम् इव भासते । चलनचित्रेषु, कामिक्स्चित्रेषु च सामान्यतः एतादृशं कार्यं दृष्टवन्तः भवन्ति भवन्तः । नित्यजीवने तादृश-साहसकरणं तु नितरां कष्टकरम् । किन्तु केरलस्य कश्चित् शूरः प्रत्यक्षं तादृशं साहसकार्यं करोति लीलया । सामान्यतः १२-१५ पाद-उन्नताः कठिनाः, आर्द्राः, अपि भित्तीः आरोहति सः । केरलराज्यस्य मुधोळि-नगरस्थः रेवरेण्ड् फादर् माथ्यू एव सः धीरः । सः पूनानगरे कराटेशिक्षणं प्राप्य तस्मिन् 'ब्लाक् बेल्ट्' अपि प्राप्तवान् अस्ति । कृषककुले जातः माथ्यू दशमकक्ष्यायाः अध्ययनस्य अनन्तरम् अध्यात्मविषये, क्रैस्तमन्दिरस्य कार्येषु च आसक्तः सन् तस्मिन् विषये शिक्षणं प्राप्य रेवरेण्ड् फादर् अभवत् । कदाचित् तस्य गृहस्य अट्टालिकां गतः कश्चित् मार्जारः अवतर्तुं न शक्तः । जनाः यदा निश्रेणीम् आनेतुम् उद्युक्ताः तदा माथ्यू तत् दृष्ट्वा झटिति भित्तिम् आरुह्य उपरि गत्वा जागरूकतया मार्जारं गृहीत्वा ततः अधः कूर्दितवान् । माथ्यूवर्यस्य सामर्थ्यं दृष्ट्वा तस्य सहपाठिनः आश्चर्यचकिताः अभवन् !

### सुवर्ण समयस्य (१६) – उत्तराणि

**विश्वे कुत्र सन्ति ?**

१. कर्णाटकराज्ये बेलूरुनगरस्य चेन्नकेशवदेवालये ।
२. दक्षिण-अमेरिकादेशस्य पेरुमध्ये । ३. पोलेण्डदेशस्य वीलिष्कायाम् ।

**प्राणिसमस्या**

१. पेंग्विन् २. चिम्पाञ्जी ३. नीलतिमिङ्गिलः ४. किवि ५. उष्ट्रपक्षी ६. उष्ट्रः ७. डिङ्गो

**कथासमस्या**

त्वरायां स्वस्य द्विचक्रिकां स्थानके त्यक्त्वा अन्यस्य द्विचक्रिकां स्वीकृत्य आगतवान् आसीत् सः ।

**विनोदप्रश्नाः**

१. एतत् कस्यचित् वृक्षस्य नाम । २. कन्दुकम् उपरि क्षिपन्तु । सः पुनः आगच्छति । ३. एष्याखण्डे विद्यमानाः कपयः तथा लाङ्गूलसाहाय्येन लङ्घनं न जानन्ति । ४. सः अङ्कनीं स्वीकृत्य ''मम वामकर्णः'' इति लिखितवान् । ५. तस्य उत्थानपर्यन्तं प्रतीक्षा करणीया । ६. द्विवर्षीयः वृषभत्वेन परिगण्यते, न तु वत्सत्वेन । ७. वयोवर्धनम् ।

चन्दमामायाः अनुबन्धः - १०७



अस्मद्देशीयानि वैशिष्ट्यानि

# मिर्जापुरस्य रत्नकम्बलानि




मिर्जापुरनगर अटन-समये द्विचक्रिकायाः, अश्वशकटस्य, कारयानस्य, जीपयानस्य च उपरि, कदाचित् उष्ट्राणां उपरि चापि रत्नकम्बलानि द्रष्टुं शक्नुमः। मिर्जापुरीयानि वेमनिर्मितरत्नकम्बलानि बहु प्रसिद्धानि। एतां विद्याम् ऐदम्प्राथम्येन पुरातन-ईजिप्टजनेभ्यः अन्ये ज्ञातवन्तः इति केचन वदन्ति।

अधुना गङ्गानद्याः दक्षिणे भागे विद्यमानयोः मिर्जापुर-भागोलिप्रदेशयोः अधिकप्रमाणेन वेम्ना रत्नकम्बलानि निर्मितानि भवन्ति। न केवलं काश्मीररत्नकम्बलवत्, अपि तु पर्षियन्-चित्ररचनाः अनुकृत्य चित्राणि सज्जीकृत्य, तेषाम् अवलम्बनेन रत्नकम्बलानि वयन्ति मिर्जापुरस्य वेमकर्मकराः।

रत्नकम्बलानां वैशाल्यं ८/५२मितं ९/६० मितं वा भवति इति श्रूयते। एकस्मिन् अङ्गुलमिते प्रदेशे कति तन्तवः भवन्ति इति ज्ञातुम् उपरितनाः संख्याः उपयुज्यन्ते। एका अन्यया गुणनीया। ततः प्राप्तः गुणलब्धः चतुर्थसंख्यया विभाजनीयः। इण्डोपर्षियन्चित्राणि ९/६० च.मी.मितानि भवन्ति। कम्बलस्य एक-च.मी.मितभागस्य मूल्यम् ८०० रूप्यकमितं ९०० रूप्यकमितं वा भवति।

अस्माकं देशस्य रत्नकम्बलेन क्रि.श.१८५१ तमे वर्षे लण्डन्नगरे आयोजिते प्रदर्शनालये विश्वस्य मनः आकृष्टम्। अधुना अस्माकं देशतः प्रधानतया जर्मनि, इंग्लेण्ड, अमेरिका, आस्ट्रेलिया इत्यादिदेशान् प्रति रत्नकम्बलानि प्रेष्यन्ते विक्रयणार्थम्।

पुराणकालस्य राजानः

# महर्षिः जह्नुः

पूर्वं धर्मपरः राजा जह्नुः प्रजानां हितमेव चिन्तयन् कयाचिदपि न्यूनतया विना राज्यपरिपालनं करोति स्म । राज्ञः शासने सर्वाः प्रजाः सन्तोषेण जीवन्ति स्म । प्रजानां परिस्थितिं द्रष्टुं सः तदा तदा देशपर्यटनं करोति स्म । क्रीडाध्ययनादिभिः सह कृषिकार्ये अपि सदा मग्नान् ग्रामीणजनान् दृष्ट्वा सन्तोषम् अनुभवति स्म सः ।

एकदा नदीतटे उपविश्य सः एकाग्रचित्ततया जलमेव पश्यन् आसीत् । जलं तु निरन्तरं प्रवहति स्म । ''कालः अपि जलमिव एकक्षणमपि न तिष्ठति खलु ? अतः कालस्य अत्ययात् पूर्वं यः उत्तमं कार्यं करोति सः एव बुद्धिमान्'' इति एवं विचारः राज्ञः मनसि आगतः ।

'प्रजानां योगक्षेमदर्शनमेव राज्ञः कर्तव्यम् । परन्तु अत्र जनाः सन्तोषेण सन्ति । पार्श्वस्थदेशस्य राजानः अपि धर्मपराः शान्तिप्रियाः च सन्ति । अतः राज्यस्य शत्रुभयमपि नास्ति । अतः अवशिष्टे जीवने तपसा कालस्य सद्विनियोगं करिष्यामि' इति राजा चिन्तितवान् ।

राजा पुत्राय बालकाश्वाय राज्यं समर्पितवान् । स्वयं हिमालयं गत्वा हरिद्वारे तपः आरब्धवान् । दृढनिश्चयेन, कठिनपरिश्रमेण च कृतेन तपसा अत्यल्पे काले एव अपूर्वं तपोबलं सम्पादितवान् सः ।

कदाचित् राजा पर्वतस्य शिखरे स्थित्वा प्रकृतेः प्रशान्ततां दृष्ट्वा आनन्दम् अनुभवन् आसीत् । तदा उत्तरदिशातः पर्वतस्य शिखराग्रतः जलप्रवाहं दृष्टवान् सः । जलप्रवाहः क्षणाभ्यन्तरे एव अधः विद्यमानां जह्नोः पर्णशालां मज्जितवान् । एतेन कुपितः जह्नुः सम्पूर्णं जलं पीतवान् एव ।

पाताललोके भस्मीभूतानां स्वस्य पूर्वजानां शापविमुक्तेः निमित्तं भगीरथेन कठोरतपसा आकाशात् आनीतायाः गङ्गायाः प्रवाहः एव सः आसीत् । भगीरथः सर्वं जह्नवे निवेदितवान् । ''कृपया गङ्गां त्यजतु'' इति प्रार्थितवान् अपि । करुणामूर्तिः जह्नुः गङ्गां कर्णद्वारा विमुक्तवान् । अतः एव गङ्गायाः ''जाह्नवी'' इति नाम आगतम् इति पुराणेषु श्रूयते ।



# भवन्तः जानन्ति वा ?

## उन्नतं शिखरम्





ग्रेटर मास्को नगरे बास्टन्किनोप्रदेशे विद्यमानस्य भवनशिखरस्य औन्नत्यं ५२३ मीटर् । एतत् अन्यस्य कस्यापि आधारेण विना स्थितम् अस्ति । एन्.वि. निकटिन् नामकेन शिल्पिना इदं भवनशिखरम् वज्रचूर्णेन निर्मितम् अस्ति। अस्य भारः ५५,००० टन्मितः । उन्नयनीद्वारा ५०० मीटर् उपरि गन्तुं अनुमतिः अस्ति शिखरस्य दर्शनार्थम्। एषा उन्नयनी प्रतिसेकेण्ड् ७ मी. वेगेन उपरि गच्छति । गोपुरस्य ३३७ मी. औन्नत्ये एकम् उपाहारमन्दिरम् अपि अस्ति । अस्य शिखरस्य उपरि नालाकारकम् एकं दूरदर्शकयन्त्रम् अस्ति। तस्मिन् अत्यधिकशक्तियुतान् विद्युत्तरङ्गग्राहकान् योजितवन्तः सन्ति । एते विद्युतम् आकृष्य तस्याः सामर्थ्यं मान्ति । यदा वायुः वाति तदा इदं शिखरं सामान्यतया ५० मी. इतस्ततः वलते । सूर्यातपे इदं शिखरम् वर्धते च । २० डिग्रि सेल्सियस् औष्ण्ये अस्य औन्नत्यं ५४० मी. पर्यन्तं वर्धते इति विज्ञानिनः गणनां कृतवन्तः सन्ति ।

## इन्द्रधनुः





## पाब्लो पिकासा

२०तमशतकस्य प्रसिद्धः चित्रकारः शिल्पी पिकासो क्रि.श.१८८१ तमे वर्षे स्पेयिनदेशे जन्म प्राप्तवान् । बाल्ये तस्य चित्रकलायां महती आसक्तिः आसीत् । बाल्ये तस्य मुखात् निःसृतं प्रथमं पदम् एव लापिस् (अङ्कनी) इति । सः चलनाभ्यासात् पूर्वमेव चित्रलेखनस्य अभ्यासं कृतवान् इति तस्य परिचिताः वदन्ति । सः कश्चित् महान् साम्प्रदायिक-चित्रकारः भवेद् इति केषाञ्चित् अपेक्षा आसीत् । किन्तु सः साम्प्रदायिकचित्रेभ्यः पूर्णतया भिन्नानां चित्राणां लेखनम् आरब्धवान् । परितः दृश्यमानं प्रपञ्चं चित्रद्वारा प्रदर्शयितुं सः विनूतनं मार्गम् एव आश्रितवान् । सरलरेखाभिः अत्यल्पस्य वर्णस्य उपयोगेन भावप्रचोदकानां क्यूटिस्ट्नामकानां चित्राणां लेखने अपि सिद्धहस्ततां प्राप्य विश्वविख्यातः अभवत् सः ।

स्वातन्त्र्यसुवर्णमहोत्सवावसरे चन्दमामायाः उपहारः

# प्रथमः स्वातन्त्र्यसङ्ग्रामः



*(वाणिज्यार्थम् अत्रत्यानां राज्ञाम् अनुमतिं प्राप्य अस्मिने देशे पादर्पणं कृतवती ईष्ट् इण्डिया संस्था गच्छता कालेन अन्याय्यमार्गेण तेषाम् एव राज्ञां भूमेः स्वायत्तीकरणम् आरब्धवती । केषुचित् एव दिनेषु सा राज्ञां निर्बन्धनम् अपि कृतवती । अपत्यरहितानां राज्ञां राज्यं संस्थायाः एव भविष्यति इति सा उद्घुष्टवती । सन्तानरहितः झान्सीराजः मरणसमये स्वपत्नीं लक्ष्मीबायीं - ''दत्तकपुत्रं स्वीकरोतु'' इति उक्त्वा मृतवान् । ''लक्ष्मीबाय्याः दत्तकपुत्रस्वीकरणं नियमबाह्यम्'' इति संस्था प्रकटितवती । एतं विषयं ज्ञात्वा लक्ष्मीबायी क्रुद्धा अभवत् । तदनन्तरम् ।...)*

झान्सीराज्यस्य प्रजाः राज्ञ्यां लक्ष्मीबाय्यां बहु आदरं, गौरवं च प्रदर्शयन्ति स्म । पण्डिताः, पामराः, सामान्याः कृषकाः, धनिकाः, वणिजः, अधिकारिणः, अर्चकाः इत्यादयः सर्वे जनाः प्रासादमार्गेण गमनावसरे - ''जयतु महाराज्ञी । केनापि महाराज्ञ्याः अपकारकरणं वयं न सहामहे । महाराज्ञ्याः रक्षणार्थं वयं प्राणान् समर्पयितुम् अपि सज्जाः स्मः'' इति उद्घोषयन्ति स्म उच्चैः ।

ईष्ट इण्डिया संस्था झान्सीराज्यस्य स्वायत्तीकरणं यदा चिन्तितवती ततः पूर्वं झान्सीराज्ञ्याः लक्ष्मीबाय्याः दिनचर्या सदापि धार्मिकी सम्प्रदायानुसारिणी च भवति स्म ।

सा सूर्योदयात् पूर्वम् एव उत्थाय सुगन्धिजलेन स्नानं कृत्वा, शुभ्राणि वस्त्राणि धृत्वा कञ्चित् कालं यावत् ध्यानं

करोति स्म । पश्चात् तुलसीं पूजयित्वा मूर्तिपूजाम् आरभते स्म । तदा सभ्याः सङ्गीतज्ञाः भक्तिगीतानि गायन्ति स्म । पुराणिकः पुराणानि पठति स्म । पश्चात् आस्थानस्य प्रमुखाः, सैनिकाः च आगत्य राज्ञीं नमस्कुर्वन्ति स्म । सा सर्वान् प्रतिनमस्करोति स्म । आस्थानस्य सार्धसप्तशते जनेषु कश्चित् एकं न पश्यति चेत् अपि सा अनन्तरदिने तम् अनागमनस्य कारणं विचारयति स्म । तस्याः अद्भुतस्मरणशक्तेः एतत् केवलम् उदाहरणमात्रम् ।

अपराह्णे सा किरीटसदृशं शिरस्त्रं, पुरुषस्य वेषभूषं च धृत्वा कटौ रत्नखचितकोषयुक्तं खड्गं स्थापयित्वा राजसभायाम् उपस्थिता भवति स्म । कण्ठे एकं रत्नहारं, हस्ते वज्रकङ्कणम्, अङ्गुल्यां वज्राङ्गुलीयकं च सा धरति स्म । पुरुषवेषेण, स्त्रीवेषेण वा आगता सा साक्षात् आदिपूज्या भगवती गौरी इव एव दृश्यते स्म ।

सा तदा तदा पद्मसरोवरस्य समीपे विद्यमानं महालक्ष्मीमन्दिरं गत्वा आगच्छति स्म । कदाचित् सा देव्याः दर्शनं कृत्वा प्रत्यागमनसमये दूरे स्थितम् आत्मानम् एव पश्यन्तं कश्चित् जनसमूहं दृष्टवती । तेषु बहवः शैत्याधिक्यम् असहमानाः वस्त्राभावकारणतः कम्पमानाः स्थितवन्तः आसन् ।

राजभवनम् आगता लक्ष्मीबायी आदौ सौचिकान् आहूय – ''युतकानि, शिरस्त्राणि च सज्जीकुर्वन्तु'' इति आज्ञापितवती । शीघ्रमेव सहस्रशः वस्त्राणि सज्जानि अभवन् । अनुक्षणमेव तानि दरिद्रेभ्यः वितीर्णानि च ।

पुनः यदा सा मन्दिरं गतवती तदा





नूतनानि वस्त्राणि धृतवतः तान् दृष्ट्वा बहु सन्तुष्टा अभवत् । ते दरिद्राः अपि शैत्यात् रक्षितवतीं राज्ञीं दृष्ट्वा सन्तोषेण कृतज्ञतापूर्वकं तां नमस्कृतवन्तः ।

एवं राज्ञ्याः लक्ष्मीबाय्याः प्रजासु स्नेहः वात्सल्यं च आसीत् । प्रजानाम् अपि तस्यां भक्तिः, आदरः, गौरवं च आसीत् । किन्तु राज्यस्य संरक्षणार्थं परस्परम् अभिमानः पर्याप्तः न भवति खलु ? कुतन्त्रिणः कुयुक्तिमन्तः दुर्मार्गिणः ईष्ट् इण्डिया-संस्थायाः अधिकारिणः स्वराज्यस्य विस्तरणाय, अन्येषां लघुराज्यानां स्वायत्तीकरणाय च अनीतिमार्गम् अनुसर्तुम् अपि सज्जाः आसन् । तादृशानां कुटिलानां सम्मुखीकरणार्थं धीराणां, कुशलानां, बुद्धिमतां च मार्गदर्शकानाम् आवश्यकता आसीत् । अपि च स्वश्रेयोभिलाषिणाम् राज्ञां, अनुयायिनां च सङ्घटनमपि करणीयम् आसीत् राज्ञ्या । लक्ष्मीबाय्याः तादृशेषु श्रेयोभिलाषिषु देशहितचिन्तकेषु सहायकेषु अग्रेसरः आसीत् - तस्याः भ्रातृतुल्यः पुर्याः चन्दनहुजूरः ।

'पुराननं पुण्यक्षेत्रम्' इति प्रसिद्धायां पुर्यां सः युवकः चन्दनहुजूरः आसीत् । लक्ष्मीबायी स्वस्य पञ्चमे वयसि मातापितृभ्यां सह पुरीं गतवती आसीत् । तस्मिन् काले जगन्नाथदर्शनकांक्षिभिः अर्चकस्य गृहे एव वासः करणीयः आसीत् । तथैव वासं कृतवतः लक्ष्मीबायी-परिवारजनान् अर्चकस्य पुत्रः चन्दनः बहु प्रीत्या सत्कृतवान् । लक्ष्मीबाय्यां तस्य विशेषरूपेण भगिनीवात्सल्यम् आसीत् । चतुरं चन्दनं लक्ष्मीबाय्याः मातापितरौ अपि इष्टवन्तौ । तौ तं पुत्रवत् एव पश्यतः स्म । तेषाम् इच्छानुसारं लक्ष्मीबायी एकस्मिन् शुभे मुहूर्ते चन्दनस्य मुखे देवस्य जगन्नाथस्य प्रसादं स्वस्य लघुकरकमलेन स्थापयित्वा 'अग्रज' इति आहूतवती ।

चन्दनः अपि आनन्दाश्रूणि श्रावयन् - "भगिनि ! भवत्याः जीवनं सर्वदा सुखमयं भवतु । भवत्याः सन्तोषं मह्यमपि दातुं मा विस्मरतु" इति उक्तवान् ।

अग्रे लक्ष्मीबायी झान्सीसाम्राज्यस्य राज्ञी अभवत् इति वार्तां श्रुत्वा सः बहु सन्तुष्टः अभवत् ।

अनन्तरं कदाचित् चन्दनस्य विवाहस्य वार्तां श्रुत्वा लक्ष्मीबायी दूतानां द्वारा तस्मै अमूल्यानि उपायनानि प्रेषितवती । तत् दृष्ट्वा

चन्दनः बहु सन्तुष्टः । तेन सह झान्सीराज्यस्य, राज्ञ्याः लक्ष्मीबाय्याः च सम्भाव्यमानां विपत्तिं ज्ञात्वा सः बहु खिन्नः अपि अभवत् । विवाहस्य अनन्तरदिने एव स्वस्मै उपायनानि आनीतवद्भिः भटैः सह झान्सीं प्रति सः प्रस्थितवान् एव ।

चन्दनेन यावत् झान्सी प्राप्ता तावता तत्रत्या परिस्थितिः पूर्वापेक्षया अधिकं शोचनीया जाता आसीत् । चन्दनस्य दर्शनस्य अनुक्षणं लक्ष्मीबाय्याः नेत्रे सन्तोषेण विकसिते । परं चन्दनः विवाहस्य अनन्तरदिने एव प्रस्थाय आगतवान् इति वार्तां श्रुत्वा सा खेदेन तं पृष्टवती – ''भवान् किमर्थम् एवं कृतवान् ? विवाह-समनन्तरमेव नवोढां पत्नीम् एकाकिनीं त्यक्त्वा किमर्थम् आगतवान् भवान् ? विवाहसमनन्तरं सा भवतः सहवासं किञ्चित्कालम् इच्छति यत् तत्र न किमपि आश्चर्यम् । सहवासदानं भवतः कर्तव्यम् अपि । सुखेच्छा कस्य न भवति लोके ?'' इति ।

''कष्टम् अनुभवन्तीम् अनुजां दृष्ट्वा कोऽपि अग्रजः सुखेन स्थातुं शक्नोति किम् ?'' इति ताम् एव पृच्छन् चन्दनः – ''यदि अकस्मात् युद्धं भवेत् तर्हि अन्यराज्यानां राजानः भवत्याः साहाय्यं करिष्यन्ति किम् ?'' इति पृष्टवान् ।

''साहाय्यं कुर्मः इति केचन प्रकाशम् एव उक्तवन्तः सन्ति । अन्ये केचन इतोऽपि किमपि न उक्तवन्तः । तथापि विश्वासघातुकैः एतैः श्वेतजनैः सह युद्धे सर्वः अपि साहाय्यं करिष्यति इति मम



विश्वासः अस्ति'' इति उक्तवती लक्ष्मीबायी ।

''भगिनि ! भवत्या उक्तं युक्तमेव । तथापि विश्वसितुम् एव अशक्याः केचन विषयाः भवन्ति । ह्यः रात्रौ एकत्र वसतिशालायां वासं कृतवान् आसम् । तत्र अहम् अन्ययोः द्वयो पान्थयोः सम्भाषणं श्रुतवान् । तयोः एकः ग्वालियरस्थः, अपरः टह्रिस्थः च । तयोः उभयोः देशयोः राजानौ भवत्याः पक्षे स्तः किम् ?'' इति पृष्टवान् चन्दनः ।

''अग्रज ! तयोः राज्ञोः विषयम् अहं किमपि न जानामि'' इति खेदेन उक्तवती लक्ष्मीबायी ।

''तौ द्वौ अपि राजानौ ब्रिटिष्जनानां साहाय्यं करिष्यतः इति अहं तयोः पान्थयोः

सम्भाषणात् ज्ञातवान्'' इति उक्तवान् चन्दनः ।

''तथा वा !'' इति आश्चर्येण पृष्टवती लक्ष्मीबायी ।

''मया श्रुतम् असत्यं एव भवतु इति अहम् इच्छामि । यदि बान्धवाः मित्राणि च शत्रुपक्षं गच्छन्ति तर्हि तस्य परिणामः भीकरः एव भविष्यति । भवत्या नानासाहेबस्य साहाय्यं तु लभ्यते एव । भवन्तौ मिलित्वा ईष्ट् इण्डिया संस्थां सम्मुखीकर्तुं शक्नुतः । तथापि अस्य अग्रजस्य एकाम् इच्छां पूरयामि इति वचनं ददातु भवती'' इति उक्तवान् चन्दनः ।

''का सा इच्छा ?'' इति भावं नेत्राभ्यां सूचयन्ती प्रश्नार्थकदृष्ट्या चन्दनं दृष्टवती लक्ष्मीबायी ।

''भवत्या सह सर्वदा भवितुम् एतस्मै अग्रजाय अवकाशः दातव्यः । मम शरीरे यावत् प्राणाः भवन्ति तावत् अहं भवत्याः रक्षणं करिष्यामि । अग्रजस्य जीवितकाले अनुजा विपद्ग्रस्ता कदापि न भवेत्'' इति उक्तवान् चन्दनः ।

''अग्रज ! मम विषये तावत् भयं मास्तु भवतः । मम पत्युः मरणानन्तरं प्रजानां रक्षणार्थम् एव अहं जीवन्ती अस्मि । निष्प्रयोजकस्य अस्य शरीरस्य विषये मम व्यामोहः नास्ति । तथापि जीवने किमपि साधनम् अकृत्वा मरणं प्राप्तुं न इच्छामि । उत्तमकार्यार्थं मरणं मम सौभाग्यं भावयामि । यदि युद्धं स्यात् तर्हि मया सह एताः निर्दोषिण्यः प्रजाः अपि मृताः भवन्ति खलु इत्येव मम दुःखम्'' इति उक्तवती लक्ष्मीबायी गम्भीरतया ।

''भगिनि ! भवत्याः प्रजाः शूराः सन्ति । ताः स्वातन्त्र्यार्थं प्राणान् समर्पयितुम् अपि सज्जाः सन्ति'' इति उक्तवान् चन्दनः।

किञ्चित्कालम् आवृतस्य मौनस्य भेदनं कुर्वती लक्ष्मीबायी उक्तवती - ''अग्रज ! भवता अधुना स्वग्रामं गत्वा नूतनतया ऊढया पत्न्या सह सुखेन दिनानि यापनीयानि सन्ति । भवतः आशिषः एव मह्यं पर्याप्ताः'' इति ।

''मम आशिषः सर्वदा सन्ति एव । तथापि अहं भवत्या सह एव भविष्यामि'' इति दृढनिश्चयेन उक्तवान् चन्दनः ।

- (अनुवर्तते)






# परिवर्तनापेक्षि जीवनम्

विद्यानगरे सोमः नाम वणिक् आसीत् । प्रौढावस्थायाः प्राप्तितः पूर्वं एव तस्य मातापितरौ नौकायाः अपघाते दिवङ्गतौ आस्ताम् । अतः सोमस्य जीवने वैराग्यम् उत्पन्नम् । तस्य बान्धवाः तं सूचितवन्तः यत् भवान् विवाहितः भवतु इति ।

''अहं कश्चन सामान्यः वणिक् अस्मि । मया जीवने प्रगतिः एव न दृष्टा । एतादृशस्य मम विवाहः किमर्थम् ? मरणपर्यन्तम् एवमेव कालं यापयिष्यामि । मम जीवने परिवर्तनमेव न आवश्यकम्'' इति दृढस्वरेण उक्तवान् सोमः ।

''ललाटलिखितं यथा भवति तथा प्रचलति सर्वम् अपि । अस्माकम् इच्छानुगुणं किमपि न भवति । अतः एतस्मिन् वयसि भवतः वैराग्यं न युक्तम्'' इति तस्य बान्धवाः उक्तवन्तः ।

सोमः तेषां वचनम् अनङ्गीकुर्वन् - ''भाग्ये विश्वासं कुर्वन्तः भवन्तः मह्यं किमर्थं सूचनां यच्छन्ति ? मम ललाटे यथा लिखितम् अस्ति तथा भविष्यति'' इति उक्तवान् ।

एकदा तं ग्रामं प्रति ब्रह्मानन्दः नाम कश्चन संन्यासी आगतवान् । सः जनान् उद्दिश्य भूतभविष्यद्वर्तमानविषयान् उक्त्वा सर्वेषाम् आत्मीयः जातः । सर्वे जनाः सोमं - 'संन्यसिनः समीपं गच्छतु' इति उक्तवन्तः चेदपि सोमः न गतवान् । अनन्तरं ब्रह्मानन्दः एव कदाचित् सोमं द्रष्टुम् आगतवान् ।

सोमः आगतवन्तं संन्यासिनं ब्रह्मानन्दं यथोचितं सत्कृतवान् । सन्तुष्टः संन्यासी उक्तवान् - ''भोः ! जीवनं भगवता अस्मभ्यं दत्तः वरः । मनुष्यः आजीवनम् उत्साहेन भवेत्'' इति ।

''कार्यं, भोजनं, निद्रा इति एतावन्मात्रम्

'भामहः'



एव खलु जीवनं नाम ? एतादृशात् जीवनात् अहं जुगुप्सितः अस्मि । अतः उत्साहेन भवितुं मया न शक्यते'' इति उक्तवान् सोमः ।

''उत्साहेन भवितुं भवता जीवने किम् अपेक्ष्यते ?'' इति सोमं कुतूहलेन पृष्टवान् संन्यासी ।

''अस्मिन् क्षणे एव मम सम्पत्तिः दशलक्षरूप्यकात्मिका भवेत् । मम पत्नी रूपवती साम्राज्ञी च भवेत् । प्रतिदिनं सर्वे मां श्लाघेरन् । तदा एव मम जीवनम् आनन्ददायकं भविष्यति'' इति उक्तवान् सोमः ।

तदा ब्रह्मानन्दः हसन् - ''एकैकः अपि स्वजीवने राजा एव । तस्य पत्नी एव साम्राज्ञी भवति । सर्वेषाम् अपि जीवनस्य मूल्यं दशलक्षरूप्यकेभ्यः अधिकम् एव । अतः जीवनं धनेन मातुं न शक्यते । अन्यजनाः अस्मान् यावत् न निन्दन्ति तावत् अस्माकं जीवने प्रतिक्षणं श्लाघनं प्राप्तम् इत्येव अर्थः । सर्वम् अस्माकं चिन्तनानुगुणं भविष्यति । सुखम् अस्ति इति वयं चिन्तयामः चेत् अस्ति । नो चेत् नास्ति'' इति उक्तवान् ।

''स्वामिन् ! एतादृशानि वेदान्तवचनानि मादृशाः अल्पाः ज्ञातुं न शक्नुवन्ति । अतः मम इच्छापूरणार्थं कोऽपि उपायः अस्ति चेत् वदतु । तदनुगुणं करोमि । नो चेत् एवमेव मां जीवितुं त्यजतु'' इति उक्तवान् सोमः दृढतया ।

''तर्हि भवान् स्वस्य इच्छानुसारं सुन्दरीं युवतिं परिणयतु । अनन्तरं भवतः सम्पत्तिः दशलक्षरूप्यकात्मिका भविष्यति । भवतः पत्नी राज्ञी भविष्यति । सर्वे जनाः स्वयं भवतः समीपम् आगत्य श्लाघिष्यन्ते । समीचीनं खलु ?'' इति उक्तवान् संन्यासी ।

एतत् श्रुतवतः सोमस्य नेत्रे सन्तोषेण विशाले जाते । तथापि सोमः संशयेन - ''स्वामिन् ! एतत् वचनं मां तोषयितुम् एव भवता उक्तं न स्यात् खलु ?'' इति पृष्टवान् सोमः ।

ब्रह्मानन्दः आश्वासनं यच्छन् इव हस्तम् उन्नीय उक्तवान् - ''मया उक्तं सर्वं सत्यमेव भविष्यति । किन्तु भवतः जीवनं यथापूर्वं एव प्रचलिष्यति । परिवर्तनं तु न दृश्यते । उत्साहः धनेन, सुखेन, श्लाघनेन वा न प्राप्यते । सः मनसि भवेत् । तन्निमित्तं

मनसः संस्कारः आवश्यकः'' इति ।

एतैः वचनैः सोमः प्रभावितः अभवत् । अतः सः रूपवतीं शारदाम् ऊढवान् । शारदा न केवलं बुद्धिमती कार्यकुशलिनी च । सा उत्तमरीत्या पत्युः सेवां करोति स्म । तया यत् किमपि कार्यं क्रियते स्म चेदपि तेन सोमस्य वर्धनम् एव भवति स्म ।



विवाहानन्तरवर्षे एव तयोः एकः सुन्दरः पुत्रः अपि जातः । सोमः तं दृष्ट्वा आनन्दितः । पुत्रे अधिकं वात्सल्यं जातम् । 'मम पुत्रस्य जीवनं मज्जीवनसदृशं न भवेत्' इति चिन्तयन् सोमः वाणिज्यम् इतोऽपि वर्धयितुं प्रयत्नं कृतवान् । तथापि तेन जीवने प्रयत्नानुगुणा प्रगतिः न दृष्टा । यतः आयस्य अनुगुणं व्ययः अपि अधिकः जातः आसीत् ।

शारदा बहु सरला आसीत् । शाटिकाः आभरणानि च आवश्यकानि इति कदापि सा पतिं न पीडयति स्म । तदा तदा सा पतिं वदति स्म - ''अस्माकं भोजनार्थं कोऽपि क्लेशः नास्ति । आरोग्यम् उत्तमम् अस्ति । वासार्थं विशालं गृहम् अस्ति । एतस्मात् अन्यत् किम् आवश्यकम् अस्माकम् ?'' इति ।

शारदा विरामसमये सङ्गीताभ्यासं करोति स्म । सङ्गीताभ्यासेन शारदा, श्रवणेन सोमः च शान्तिं लभेते स्म । शारदा बहु प्रतिभाशालिनी । अतः वर्षाभ्यन्तरे एव नगरे प्रवृत्तायां सङ्गीतस्पर्धायां सा प्रथमं पारितोषिकं प्राप्तवती ।

एवं सति कदाचित् तस्य ग्रामस्य परिसरे वज्रं प्राप्यते इति जनाः ज्ञातवन्तः । अनेके वज्रपरीक्षकाः, वणिजः च विद्यानगरं प्रति आगतवन्तः । भूमेः उत्तममूल्यं प्राप्तम् इति कारणेन सोमस्य प्रतिवेशिनः सर्वे आगतेभ्यः वणिग्भ्यः स्वकीयं गृहं भूमिं च विक्रीय स्थलान्तरं गतवन्तः । वणिक् सोमः नूतनं स्थलं गत्वा वाणिज्यं कर्तुम् अशक्नुवन् ग्रामे एव स्थितवान् ।

अधुना सोमस्य प्रतिवेशिनः सर्वे धनशय्यायां एव निद्रान्ति स्म । सोमेन एकवर्षावधौ यावत् सम्पाद्यते स्म तावत् धनं ते धनिकाः एकदिनस्य विलासार्थं व्ययीकुर्वन्ति स्म प्रायः । ते सर्वे दुर्व्यसनिनः आसन् । तेषां मध्ये सोमः एकः एव उत्तमः आसीत् ।

अतः सोमस्य कष्टमेव आसीत् ।



महाधनिकानां मध्ये एषः एकः एव दरिद्रः इव आसीत् । वस्तुतः सोमः तु दरिद्रः न । किन्तु परितः विद्यमानजनानां सम्पत्तिः एतं तथा चिन्तयितुं प्रेरितवती आसीत् ।

''संन्यासी माम् असत्यम् एव उक्तवान् अस्ति । विवाहितस्य मम चत्वारि वर्षाणि अतीतानि । तथापि मम सम्पत्तिः न प्रवृद्धा । मम पत्नी अपि साम्राज्ञी न अभवत् । मया श्लाघनमपि न प्राप्तम्'' इति विलपन् आसीत् सोमः ।

एवं सति एकस्मिन् दिने विद्यानगरम् आगतः ब्रह्मानन्दः सोमं द्रष्टुं गतवान् । तस्मिन् समये सोमः पुत्रेण सह क्रीडन् आसीत् । संन्यासी तं दृष्ट्वा - ''अहो ! सम्प्रति भवतः मुखे महान् उत्साहः दृश्यते । भवान् विवाहितः इति कारणेन भवतः जीवने महत् परिवर्तनमेव जातम् अस्ति'' इति उक्तवान् ।

सोमः पुत्रम् अन्तः प्रेषयित्वा संन्यासिनं नमस्कृत्य उक्तवान् - ''स्वामिन् ! अधुना मम जीवने विरक्तिः नास्ति । तथापि भवता यथा उक्तं तथा परिवर्तनं किमपि न दृष्टं मया'' इति ।

तदा संन्यासी हसन् उक्तवान् -''भवतः जीवने मया उक्तं परिवर्तनं सर्वं जातम् अस्ति एव । किन्तु मया उक्तम् आसीत् खलु - जीवनं यथापूर्वं प्रचलिष्यति इति ? तथैव प्रचलत् अस्ति'' इति ।

तत् श्रुत्वा सोमः आश्चर्येण - ''स्वामिन् ! मम जीवनं यथापूर्वमेव अस्ति इति तु सत्यमेव । परन्तु भवता उक्तं परिवर्तनं किमपि मया न दृष्टम् । भवता उच्यते यत् परिवर्तनं जातम् अस्ति इति । तत् कथं जातम् अस्ति ? कृपया विवृणोतु'' इति उक्तवान् ।

तावता पार्श्वगृहतः एका वृद्धा आगत्य सोमम् उक्तवती - ''अयि भोः ! भवादृशं पुत्रं प्राप्तवन्तौ भवतः मातापितरौ एव नितरां भाग्यशालिनौ । मम त्रयः पुत्राः सन्ति । ते सर्वे अपि मद्यपाः । अतः मम गृहे शान्तिः एव नास्ति । अहं कञ्चित् कालं यावत् भवतः गृहे उपविश्य रामायणं पठित्वा गच्छामि । अत्र भवतः आक्षेपः नास्ति खलु?'' इति ।

सोमः शिरश्चालनेन अङ्गीकारं सूचितवान् । सा वृद्धा गृहस्य अन्तः गतवती । संन्यासी मन्दं हसन् उक्तवान् - ''भवतः प्रतिवेशिनां दुर्व्यसनकारणात्

प्रतिदिनं यः कोऽपि भवन्तं श्लाघते एव खलु ?'' इति ।

सोमः आश्चर्यचकितः सन् 'सत्यम्' इति अङ्गीकृतवान् । तावति काले सोमस्य पत्नी आगत्य संन्यासिने क्षीरं दत्तवती । संन्यासी क्षीरचषकं स्वीकुर्वन् - ''अम्ब ! केभ्यश्चित् दिनेभ्यः पूर्वं भवती सङ्गीतस्पर्धायां पारितोषिकं प्राप्तवती खलु ? तत्र भवत्यै दत्ता प्रशस्तिः का ?'' इति पृष्टवान् ।

सा लज्जया शिरः अवनमय्य उक्तवती - ''सङ्गीतसाम्राज्ञी इति'' इति ।

''श्रुतवान् खलु भवान् ? भवतः पत्नी साम्राज्ञी अस्ति'' इति उक्तवान् संन्यासी ।

असन्तृप्त्या शिरः चालयन् पृष्टवान् सोमः - ''तर्हि मम सम्पत्तिः दशलक्ष-रूप्यकात्मिका कुतः न अभवत् ?'' इति ।

''गृहं भूमिः च विक्रीयते चेत् कियत् धनं प्राप्येत इति किम् अन्यान् विचारितवान् भवान् ?'' इति पृष्टवान् संन्यासी ।

सोमः दिग्भ्रान्तः सन् उक्तवान् - ''आम् ! ततः दशलक्षरूप्यकपरिमितं धनं, ततोऽपि अधिकं वा प्राप्येत । किन्तु एतत् सर्वं विक्रीय अहं कुत्र गच्छानि ? एतत् मम जन्मस्थलम् । अत्रैव अहं प्रवृद्धः । एतत् मम परिचितस्थलम् अपि'' इति ।

''भवतः भाग्यम् अस्ति । अतः जीवने भवता यानि परिवर्तनानि इष्टानि तानि सर्वाणि प्राप्तानि । किन्तु भवतः जीवनं यथापूर्वम् अस्ति । एतस्य कारणं भवतः चिन्तनक्रमे स्थितः दोषः । ग्राममपि अत्यजन् क्रियमाणं वाणिज्यमपि अपरिवर्तयन् भवान् परिवर्तनम् अपेक्षते चेत् जीवने कथं परिवर्तनं भवेत् ? भवतः जीवने अपेक्षितं परिवर्तनम् आवश्यकं चेत् भवान् स्वचिन्तने परिवर्तनम् आनयेत् । सत्यं ननु ?'' इति उक्तवान् ब्रह्मानन्दः ।

एतत् श्रुतवतः सोमस्य ज्ञाननेत्रे उद्घाटिते । सः संन्यासिनं नमस्कृत्य उक्तवान् - ''स्वामिन् ! मम जीवनं बहु उत्तमम् अस्ति । एतत् भाग्यम् अज्ञात्वा मया परिवर्तनम् इष्टम् । एषः मम एव दोषः । अहम् अत्रैव वासं करिष्यामि । एवमेव जीविष्यामि । इतः परं मम जीवने निरुत्साहः एव न भविष्यति'' इति ।

संन्यासी तृप्त्या शिरः चालयन् ततः प्रस्थितवान् ।



## चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

विजितां शीर्षिकां जनवरी - १९९८ मासे प्रकटयिष्यामः ।



DHARM NATH PRASAD



DHARM NATH PRASAD

* उपरितनं चित्रद्वयं पश्यन्तु । * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा नवम्बर् - २० तः पूर्वम् एव प्रेषयन्तु । * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । * शीर्षिका समपत्रे (पोस्ट्-कार्ड्) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । * अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया ।

**चन्दमामा(संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, २ घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५**

'सप्टम्बर्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -

प्रथमचित्रम् - **धनिकः वाञ्छति शकटस्पर्धाद्वारा आप्तुं मोदक्षणम् ।**

द्वितीयचित्रम् - **याचकः इच्छति भक्तिद्वारा अवाप्तुं धान्यकणम् ॥**

प्रेषकः - एम्.जि. पाटील्, भाऊसाहेबढोले निवासः, विठ्ठलनगरम्, लातूरु - ४१३५१२




Printed by B.V. REDDI at Prasad Process Private Ltd., Chandamama Buildings, Chennai - 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, 188, N.S.K. Salai, Vadapalani, Chennai - 600 026 (India) Editor : NAGI REDDI.

CHANDAMAMA (Sanskrit) November 1997 Regd. No. TN / MS (S) 302/97
RN 42664 / 85



